the *Pandita* so as to impress the king with his attainments and abilities. Designed, therefore, as models of perfection for the younger *Panditas* to copy and emulate, these verses make a great display of the erudite learning and poetical craftsmanship of our author and are, at the same time, wonderfully faultless and excellent according to all canons of Sanskrit poetics. But the topics of these verses are just a few. Eulogy of a king, or the description of the seasons and the time, erotic verses of different aspects, and the description of the *Nayikas* in particular, are subjects well-known in Sanskrit literature; they are almost stereotyped and the literature upon them is vast indeed. It is, therefore, too much to expect that *Harihara* would say something new or original about them. They show, on the otherhand, quite unmistakably the influence of older literature on the subject, and to name only one, the influence of *Rasaparijata* of *Kaviraja Bhanudatta* is seen clearly over this *Subhashita*. while the whole of its tenth chapter is greatly indebted to and largely modelled upon the famous *Rasamanjari* of the same *Kaviraja*. But even when the ideas or imageries are the same as developed by older poets, the manner in which he presents them, and the language in which he puts them, are all his own, and, therefore, though he has to say very little that is absolutely new, the way in which he says those things is novel, indeed. In one respect, he is, however, quite original. No other poet has played upon the names of the different signs of the Zodiac in the same way as *Harihara* has done in his description of the six seasons.

But what it lacks in originality has been much more than recompensed by the boldness of conception, flights of imagination, richness and perfection of embellishments, appositeness of style and diction, and the variety of metres, with the result that the production is a brilliant work of art, sweet and charming, skillfully executed and lavishly decorated, a new work altogether though on old subjects. Just for these reasons, this portion lacks in that freshness and spontaneity which characterise the didactic portion of it, and there is a tinge of artificiality descernible throughout, though the verses in smaller

metres even in this portion have much of that naturalness and grace which we miss so sadly in others. In points of polish and elegance, in what is called finish, the work is, however, uniformly splendid, and with so few blemishes and so many excellences, this work is, indeed, rare even in the vast field of Sanskrit literature.

Let me recall in this connection the words of late *Dr. R. L. Mitra* thrown casually in the midst of his notice of the Manuscript of this work (Notices Vol. V, P. 164, No. 1851). Very very rarely, indeed, does the learned Doctor express any opinion about the literary merit of the works noticed by him, but so very charmed was he by the excellences of this work that he goes out of his way in noticing this unique work and in one short sentence gives the quintessence of all critical appreciations of this *Subhashita*, the last word, indeed, on the subject. Let me, therefore, close this in the words of the late *Dr. R. L. Mitra* himself that *"the poems of this Subhashita are of high merit"*.

Such is this exquisite work, small though unique, which I place before the lovers of Sanskrit language and literature in the hope that published in its complete form from some of the oldest and most reliable Mss. the text of this edition will be found much more perfect and genuine and will, therefore, be read with better appreciation and greater delight. Long and detailed, indeed, has this introduction been, but if it is found to have fixed with any precision the identity and age of our authors, and rendered any help in the better understanding of the work by throwing fresh light, however feeble, on the condition of the society for which the work was composed, and ideals of the age which have been enshrined for ever herein, I shall deem my labour amply repaid.

In the end I must offer my thanks to *Mm. Dr. Umesha Mishra*, whose statement, as stated at the very outset, led me to undertake this work. But if this undertaking has been successful, that success is due to the constant advice and helpful suggestions of *Kavishekhara Pandita Badarinatha Jha*, lately of the Dharmasamaja Sanskrit College of

Muzaffarpur and his worthy disciple, *Pandita Surendra Jha Suman*, the Editor of the *Mithilamihira* of *Darbhanga*. But for their cordial assistance and encouragement, this would never have been what it is.

I must also acknowledge here the deep sense of my gratitude to *Pandita Girindramohan Mishra*, the Assistant Manager of Darbhanga Raj, who has been kind enough to go through the entire work in manuscript, and charmed by its excellences, arranged for its publication. And for its publication in such an excellent form, I must thank *Pandita Upendra Acharya*, the Manager of the *"Indian Nation"* of Patna, and his assistants, *Pandita Dineshwar Jha* and *Pandita Kali Kant Jha*. The proofs have been looked into by my friend *Dr. Subhadra Jha Shastri* but he is too close a friend of mine to require any thanks for that.

I only regret that for want of proper diacritic marks, this portion could not be made as perfect as I had liked it to be, but there was no help for that and I must apologise for the difficulty and confusion that may result for want of them.

Darbhanga
Raj Library,
31-10-48.

RAMANATHA JHA.

*P. S.*

Since going to the Press I have come across another Manuscript of this work in the possession of *Mahavaiyakarana Pandita Shri Dinabandhu Jha* of *Sarisaba Mahavidyalaya*. This is a paper manuscript, excellently written but incomplete both in the beginning and at the end. It opens on the 16th folio with the middle of the second verse of the 4th chapter and ends on the 68th with 34th of the last chapter. It is, however, written fairly correctly and except for the mistakes in putting the *Visargas* properly and the right use of ण, it is without doubt as useful as the fragment of the Ms. ग. It is very important to note

that this manuscript contains all the verses that are found in Mss. घ and ग, even the 50th verse of the 9th chapter, except only one, the 30th verse of the last chapter. I have noted down the readings of this manuscript also under the sign द and it will be seen how very useful the find of this Ms. has been to decide the most suitable readings of the text. I only regret that the manuscript is incomplete so that it could not help me throughout the whole work, and it cannot be gathered who wrote this and when.

4-12-48. RAMANATHA JHA.

# सूक्तिमुक्तावली

श्री हरिहरविरचितं

## सुभाषितम्

———:०:———

### मङ्गलप्रकरणम् ॥१॥

ॐ नमो महागणेशाय ।

पायाज्जाया पयोजातजन्मनो मन्मनोमुदम् ।
शारदा पारदासारतुल्यधावल्यधारिणी ॥१॥

गोविन्दाख्यानपीयूषप्लवैरिव सितीकृताम् ।
व्यासादिवदनाम्भोजभ्रमरीं भारतीं भजे ॥२॥

गौरीगिरीशयोरेकमङ्कालङ्कारकारणम् ।
मदवारिझरोद्गारमयं वस्तु वयं स्तुमः ॥३॥

गण्डकण्डूयनोत्खातमेरुमूलान्तशायिनम् ।
पायाद् गणेशितुः शेषं विसमित्यामृशन् करः ॥४॥

स्तुमस्ते लोचने विष्णोर्विना याभ्यां जगन्त्यपि ।
अन्धीयन्त्यप्रतीकारं चारुलोचनवन्त्यपि ॥५॥

सामुद्रेषु सुजन्मानमेकं श्रीकौस्तुभं स्तुमः ।
नारायणोरःस्थेनापि येनालङ्क्रियतेऽम्बुधिः ॥६॥

नीलिमानमहं वन्दे तन्देवस्य मुरद्विषः ।
तदाप्लवादिव प्राप्तं यमुना यं न मुञ्चति ॥७॥

प्रीयतां श्रीर्य्यया विश्वं वशीकृत्य लघूकृतम् ।
किमन्यद्विश्वभृद्वक्षःकस्तूरीमकरीकृतः ॥८॥

---

५. [illegible] (प). ८. भुग् (का).

स पायात्पार्वतीपाणिः फणिकङ्कणिना धृतः ।
सात्त्विकेषु विकारेषु त्रासो यत्रास निह्नवः ॥९॥
शिवायाः शवतापन्नमपि यन्न जहौ हरः ।
वपुस्तन्नौमि येनान्तःकीटः कैटभजित्कृतः ॥१०॥
कलां तामैन्दवीं वन्दे यया यादष्पतिः पिता ।
आरुह्य हरमूर्द्धानं कृतस्त्रैलोक्यमूर्द्धनि ॥११॥
जगत्पतिपदस्पर्शजातामर्षेव जाह्नवी ।
जयत्यम्बुकणैर्ज्जन्तून् जनयन्ती जगत्पतीन् ॥१२॥
विसृजन्त्याः पुरा यस्या ब्रह्माण्डाण्डानि वारिधौ ।
सूतिखेदारवो वेदास्तां मात्सीम्मूर्तिमाश्रये ॥१३॥
तं स्तुमः कमठं यस्मिन्नास्ते सगिरिसागरा ।
मन्थाचलकिणक्रोडमग्ना मृदिव मेदिनी ॥१४॥
स क्रोडः क्रीडतावन्तःक्रान्तकल्पाब्धिपल्वलः ।
यद्दन्तलग्नजम्बालक्षोदालम्बा जगत्त्रयी ॥१५॥
विदारयन् हरिः पातु हिरण्यकशिपोरुरः ।
तदन्तर्गतमात्मीयन्द्वेषमन्वेषयन्निव ॥१६॥
नमाम वामनन्धाम त्रिभिस्त्रिभुवनं पदैः ।
वामनीकृत्य कथिता येनात्मनि तदात्मता ॥१७॥
स्तुमस्तमुद्यमे यस्य त्रासात्त्रिस्सप्तधा व्यधात् ।
क्षत्रियक्षतजाम्भोधावन्तर्द्धानं वसुन्धरा ॥१८॥
स पातु यः प्रतापाग्निपाकपिण्डीकृताम्भसम् ।
सेतुना पुनरुक्तेन ततार क्षारवारिधिम् ॥१९॥
तं नौमि यमुना यस्य लाङ्गलाग्रापवर्त्तिता ।
उपास्य पादावभजद् गङ्गासङ्गमयोग्यताम् ॥२०॥

---

९. आस इति रूपमपाणिनीयम्. १० स्फोटः (का). १३. त्सीमू (का).
१५. तां वन्तका..(का), डितावन्तका..(रा०प०). २०. र्त्ति (प).

बुद्धमुद्बुद्धकारुण्यरसावासमुपास्महे ।
अहिंसा दीर्घसंसारदारिणी येन दर्शिता ॥२१॥
निश्शेषोन्मूलितम्लेच्छं करिष्यन्नवनीतलम् ।
करवालकरः कल्की भिनत्तु कलिकल्मषम् ॥२२॥
मत्स्यादयो दशाप्यंशा यस्य कंसान्तकारिणः ।
तं कुक्षिकुहरक्षिप्तद्विसप्तभुवनम्भजे ॥२३॥
स्तनपं क्षणमङ्केन वोढुं म्लायन्ति मातरः ।
जयत्युर्वीयमङ्कस्थं पुष्णन्त्यामरणं जगत् ॥२४॥
मृतानुगामि तन्नौमि शम्भोरम्भोमयं वपुः ।
आत्मव्ययेन यज्जन्तोरन्तःशैत्याय जायते ॥२५॥
विश्वजीवननिर्बन्धमहं गन्धवहं भजे ।
चेष्टतेऽधिष्ठितं येन सहजेन जडञ्जगत् ॥२६॥
तद् व्योम व्योमकेशस्य वयं वन्दामहे वपुः ।
पूर्त्यै यदेकदेशस्य नालं ब्रह्माण्डकोटयः ॥२७॥
नमश्चन्द्रमसे तस्मै यस्मै दृक्कोटिकैतवात् ।
अर्प्पयन्ति जगन्ति द्रागुन्निद्राम्बुरुहाञ्जलीन् ॥२८॥
सौरी जयत्यसौ रीतिश्शश्वद्विश्वविलक्षणा ।
यज्जगद्बोधनायास्य निरालम्बेऽम्बरे भ्रमिः ॥२९॥
स्वर्व्वासिनां हविर्भागवहनं दहनं स्तुमः ।
दहन्तमपि यं नित्यमुपजीवन्ति जन्तवः ॥३०॥
होत्रा नस्त्राणकृद् भूयाद् वपुषा स वृषाकपिः ।
जज्ञे यज्ञेन रूपेण यत्कृते प्रकृतेः परः ॥३१॥
इलाजलानिलव्योमसोमसूर्याग्निहोतृभिः ।
अस्मान् विस्मारयत्वेकः कष्टमीशोऽष्टमूर्तिभिः ॥३२॥

इति श्री हरिहरसुभाषिते मङ्गलप्रकरणम् ॥१॥

---

२२. किल्विषम् (प). २४. मक्लिष्टं (का), ष्णात्या (का). २५. This is का०-पाठ. मा and रा worn out-प has नतासुगामि. . २६. वीजन (मा० रा०प०), धिष्ठितं चेष्टते (प). ३२. मूर्त्ति (का).

## बालविनयप्रकरणम् ॥२॥

अन्तःप्रकाशमिच्छन्तः सदसच्च विवेचितुम् ।
स्नेहं सूक्तिप्रदीपेऽस्मिन् बर्द्धयन्तु सुबुद्धयः ॥१॥
उच्चैःस्थितीनां विदुषां पदमारोढुमिच्छवः ।
सत्सुभाषितसोपानसेविनः सन्तु साधवः ॥२॥
समाजेभ्यः सुमनसां सुभाषितमयं मधु ।
यावज्जीवं विचिन्वन्ति साधवो मधुपा इव ॥३॥
लक्षैर्बन्धकितं बद्ध्वा भारवीयं सुभाषितम् ।
प्रक्रान्तपुत्रहत्याघं निशि माघं न्यवारयत् ॥४॥
सुभाषितमधून्येव जनो यद्यवमन्यते ।
रसनामात्मनः केन रसेनोपकरिष्यति ॥५॥
सुभाषितामृतास्वादसुखसम्मुखचेतसः ।
सम्भावयन्ति पीयूषमप्यूषरजलायितम् ॥६॥
सुभाषितगुणेनैव मुनेर्वल्मीकजन्मनः ।
नद्यमद्यापि नापैति रामायणमयय्यँशः ॥७॥
भारताख्यं सरो भाति व्यासवागमृतंभृतम् ।
यत्र क्षत्रकुलाब्जेषु हंसीयति हरेर्य्यशः ॥८॥
न कस्यानुमतः काव्ये गुणो हनुमतः कवेः ।
यद्रसान्तश्चिरम्मग्नैरुपलैरपि धार्य्यते ॥९॥
प्रसादोत्कर्षमधुराः कालिदासीर्व्वयं स्तुमः ।
पीतवाग्देवतास्तन्यरसोद्गारायिता गिरः ॥१०॥
दण्डिन्युपस्थिते सद्यः कवीनां कम्पताम्मनः ।
प्रविष्टे त्वान्तरं बाणे कण्ठे वागेव रुद्ध्यते ॥११॥
भ्राम्यन्तु मारवग्रामे विमूढा रसमीप्सवः ।
अमरुद्देश एवासौ सर्वतः सुलभो रसः ॥१२॥

---

२. म(का). ४. प्र(प). ५. ना (प). ६. त-स्वब(प). ८. तोद्धृ (प), तंबृ (का).
९. सो (का). १०. विमलाः (प). ११. ण्डीत्यु(का), गते (प).१२. रू (का०प०).

जडानामपि चैतन्यम्भवभूतेरभूद् गिरा ।
ग्रावाऽप्यरोदीत् पार्वत्या हसतः स्म स्तनावपि ॥१३॥
नैतच्चित्रमहम्मन्ये माघमासाद्य यन्मुहुः ।
प्रौढताऽतिप्रसिद्धाऽपि भारवेरवसीदति ॥१४॥
गाश्चारयँश्चिरादासीत्कामं गोवर्धनः क्षितौ ।
सोऽप्यर्थवान् बभूवाहो ! शालिवाहोपजीवनात् ॥१५॥
रसैर्निरन्तरं कण्ठे गिरा श्लेषैकलग्नया ।
सुबन्धुर्व्विदधे स्रष्टा करे बदरवज्जगत् ॥१६॥
आकर्ण्य जयदेवस्य गोविन्दानन्दिनीर्गिरः ।
बालिशाः कालिदासाय, स्पृहयन्तु वयन्तु न ॥१७॥
सम्पूरयन्तु धामैव धावकस्य धनैर्गिरः ।
गिरे मुरारेर्द्दारिद्र्यस्पृशेऽपि स्पृहयामहे ॥१८॥
अर्थार्थिनां प्रिया एव श्रीहर्षोदीरिता गिरः ।
सारस्वते तु सौभाग्ये प्रसिद्धा तद्विरुद्धता ॥१९॥
नवीनामनवीनां वा कवीनां लुम्पता स्मृतिम् ।
नैव शंकरमिश्रेण शंकराचार्यविस्मृतिः ॥२०॥
सन्तु शास्त्रविदः श्रेष्ठाः प्रतिष्ठा काऽपि काव्यतः ।
ख्यातिः किं कालिदासस्य कृता टीकाकृताऽप्यधः ॥२१॥
हृद्याः सन्तु शतं विद्याः काव्यादव्याहतर्य्यँशः ।
निपीतदर्शनग्रामे देहि रामेश्वरे दृशम् ॥२२॥
सत्काव्यं राज्यमित्याहुः कवयो न मयोच्यते ।
तृप्यत्यर्थं कविर्ध्यायन्नैवं राजा तु जात्वपि ॥२३॥
तत्पिबन्त्वमृतं देवाः काव्यमेवामृतम्भुवि ।
यत्सम्बन्धेन जीवन्ति भोजराजादयो मृताः ॥२४॥

---

१४. न्मु (मा०रा०). १६. दृष्ट्वा (का). १७. न तु (का). २०. तां (का०प०)
२२. न्ति (प), ष्पी (प).

को नायुद्ध्यन्न कः प्रादान्नृपोऽनादावनेहसि ।
अनाराध्य कविं कस्य चिरं क्रीडन्ति कीर्त्तयः ॥२५॥
वशीकरणमेकं हि जगतो यदि पृच्छसि ।
सुभाषितानि सम्यञ्चि सञ्चिन्वानः समभ्यस ॥२६॥
चमत्करोति केषाञ्चित् सुकृतेन सुभाषितम् ।
दुर्लभं पुनरेतस्य वैलक्षण्यपरीक्षणम् ॥२७॥
सुकृतेन कुले जन्म, सुकृतेन सुभाषितम् ।
सुकृतेन सती भार्य्या सुकृतेन कृती सुतः ॥२८॥
कुलशीलश्रुताचारवतां किल सतां कुले ।
चिरादाराध्य जायन्ते पुरुषाः पुरुषोत्तमम् ॥२९॥
तपत्युपरि संसारदुःखसम्भारभास्वति ।
पूर्वपुण्यतरुच्छाया साध्वी जाया सुजन्मनः ॥३०॥
ग्रामस्याधिर्गृहे व्याधिः कटुवाणी कुटुम्बिनी ।
हृत्कुठारः कुलाङ्गारः सुतः साधुपथच्युतः ॥३१॥
विना शीलेन वनिता वाग्मिता विद्यया विना ।
विनियोगैर्व्विना वित्तं माऽस्तु कस्यापि देहिनः ॥३२॥
सत्कुलं भूषणं पुंसः सद्भार्य्या कुलभूषणम् ।
सत्पुत्रभूषणा भार्य्या पुत्राः सन्मतिभूषणाः ॥३३॥
पुन्नाम्नो नरकादेव पुत्रा न त्राणकारिणः ।
विस्मारयन्ति स्त्रीणाञ्च नरकक्लेशमप्यमी ॥३४॥
शिशोः क्रीडनकैर्वेश्म कलालापैरपि श्रुतिः ।
वपुरंगरजोभिश्चेन्नाकुलं जगदाकुलम् ॥३५॥
बालैः परिहृतं वेश्म न श्मशानाद्विशिष्यते ।
यत्रस्था देहिनो नित्यं दह्यन्ते गतचेतसः ॥३६॥

---

२५. के (का). ३२. जीविनः (का). ३४. नाम (मा).

न चन्द्रश्चन्द्रमाः पुत्रं चन्द्रमाहुर्म्मनीषिणः ।
दृष्टे स्पृष्टे श्रुते चोक्ते घ्राते यत्रेन्द्रियोत्सवः ॥३७॥
जातमात्रेण पुत्रेण कः प्रमोदो मनीषिणाम् ।
यदि नाम न विद्यादिगुणैःसार्द्धं स वर्द्धते ॥३८॥
अनिच्छन्तोऽपि विनयं विद्याभ्यासेन बालकाः ।
भेषजेनेव नैरुज्यं प्रापणीयाः प्रयत्नतः ॥३९॥
शनैश्शनैर्विनीयन्ते तर्ज्जनैस्तोषणैरपि ।
नवा इवाश्वाः कुशलैर्ब्बालाश्चपलचेतसः ॥४०॥
लालयेद् बालकन्तावद्यावदत्र विमुग्धता ।
राजा प्रजास्विव प्रीतिं पश्चात् प्रच्छादयेत् पिता ॥४१॥
वरं बन्ध्यत्ववादोऽपि योषित्पुरुषयोस्तयोः ।
याभ्यां लालनलुब्धाभ्यां न विनीतः स्वयं सुतः ॥४२॥
वपूंषि जनयन्त्येव जन्तून् यूकादिकानपि ।
तेषु द्वेषवतः प्रीतिरविनीते सुते कुतः ॥४३॥
अप्यनेकैरुपचितैर्दुर्विनीतैः सुतैरलम् ।
निदर्शनं धार्त्तराष्ट्राः शतं दुर्य्योधनादयः ॥४४॥
एकेनापि विनीतेन सुतेनोद्धृयते कुलम् ।
गङ्गावतारणापारप्रथं पश्य भगीरथम् ॥४५ ॥
नीचैरेव परं सर्प्पत् पयोऽप्युच्चैर्न्नयेन्नरः ।
विरलास्तरलाक्षाणां बालानां शिक्षणे क्षमाः ॥४६॥
पुरा हि पतितः प्राह प्रवाहे निष्प्रतिक्रियः ।
बालान्नाध्यापयिष्यामो मग्नाः स्याम वयं वरम् ॥४७॥
शिशोर्दुश्शिक्षणीयत्वात्सोपेक्षो न क्षणं भवेत् ।
विपुलाय फलायालं कृष्टकृष्टा वसुन्धरा ॥४८॥

---

३८. णः (का). ४२. वा(प). ४५. द्वि. (क). ४७. विपतस्यामो (का), स्यामो(प).

व्याहारेण विहारेण सदसत्सङ्गमेन च ।
पुरः पुत्रं परीक्षेत चिरभाविनि पौरुषे ॥४९॥
यः पुरो मधुरोदारस्तेन भारः पितुर्द्धृतः ।
सान्द्रस्निग्धो नदन् धीरं नीरं क्षरति वारिदः ॥५०॥
शिशौ प्रविशतः प्रायः प्रतिवेशिगुणागुणौ ।
गन्धोऽन्यसन्निधेरेव सङ्क्रामति समीरणे ॥५१॥
कदाचित् साधुतामेति पुरः शिशुरसन्मतिः ।
प्राक् पाण्डुपत्राः कुत्रापि चोयन्ते चारुभूरुहाः ॥५२॥
किमध्ययनभग्नेन सुतेनातिसुबुद्धिना ।
तीक्ष्णेन करवालेन किं भीरुकरवर्त्तिना ॥५३॥
यावन्न यौवनं प्राप्तः शिक्ष्यते तावदात्मजः ।
व्यतीतकाले केदारे कर्षणैः किं करिष्यते ॥५४॥
विनयन्तु सुतान् सन्तः स्वसम्पाद्याः पुनर्गुणाः ।
सर्वं कृषाणाः कुर्व्वन्तु बीजं सूतेऽङ्कुरं स्वतः ॥५५॥
स्वयमेव समीहन्ते गुणान् भव्याय भाविनः ।
प्रगुणाय प्ररोहाय करीराः केन शिक्षिताः ॥५६॥

इति श्री हरिहरसुभाषिते बालविनयप्रकरणम् ॥२॥

---

५०. त्रो (प). ५२. पु (का). ५३. हीनेन (का० प०). ५४, न (रा० मा०), क्ष (रा० प०), ति (प). ५६. महीयन्ते (प).

## सुहृदुपदेशप्रकरणम् ॥३॥

सुचिरं सुखयति पुरुषं निपुणमधीतं वयःक्रमे प्रथमे ।
सन्तुष्यति कृषिकारः सत्समये साधुकृष्टकेदारः ॥१॥

नाधीतङ्कैशोरे किमुपकरिष्यत्यनन्तरे वयसि ।
अङ्कुरनिहितकुठारः कतरो हि तरोः फलं लभते ॥२॥

कुरु गुरुवचो निपीतं भूयो भूयो विचिन्तयाधीतम् ।
विद्या गुरूपदिष्टा चिरपरिमृष्टा विभूषणं विदुषः ॥३॥

यद्यप्यसि जडचेतास्तदपि न रे तात! हेयमध्ययनम् ।
जङ्घाल एव शैलं न लङ्घते किन्तु के न गच्छन्तः ॥४॥

आत्मोपकारचतुरा नरा न गणयन्ति गुरुकुलक्लेशम् ।
वेधव्यथैव कियती श्रवसो ह्यवतंसभूषणीयस्य ॥५॥

क्व लघुः श्रियो विलासः क्व पुनर्व्विद्यारसोल्लासः ।
साक्ष्यं वदन्त्विवदञ्च द्वितयेऽस्मिंस्तारतम्यसम्यञ्चः ॥६॥

उपदिशति लोकवृत्तं वितरति वित्तं विनोदयति चित्तम् ।
उत्तम्भयति महत्त्वं विद्या हृद्या सुराजसेवेव ॥७॥

वरमेकैव निसृष्टा विद्येति ब्रूयुरल्पसन्तुष्टाः ।
परिमितगुणपरितुष्टा न जात्वभीष्टोन्मुखाः पुरुषाः ॥८॥

एकामधीत्य विद्यां बिभेति बहुविद्यपरिषदं प्राप्तः ।
क्वासन्नशस्त्रनिकरः कुत्रैकशरः पुनः पुरुषः ॥९॥

विद्या विनयोपेता हरति न चेतांसि कस्य मनुजस्य ।
मणिकाञ्चनसंयोगो जनयति लोकस्य लोचनानन्दम् ॥१०॥

अपि निपुणतरमधीतं दुर्व्विनयारूढचेतसः पुंसः ।
मणिरिव फणिफणवर्त्ती प्रभवति शोकाय लोकानाम् ॥११॥

---

४. पि (का). ५. गृह (का). ८. विमृष्टा (प), सन्तुष्टा (प), ष्टो-खः-षः- (मा०रा०). १०. यमु (प).

विगुणा बह्वोऽपि गुणा विना विनीतेन चेतसा पुंसः ।
निशितैरलं, शरशतैरनुपेतपतञ्जिके धनुषि ॥१२॥
भूषणमेव न कुरुते दूषणमप्यावृणोति विनयोऽयम् ।
भूषयति रुचिरमंशुकमङ्गान्यपि तानि किं न गोपयति ॥१३॥
पुंसो विभूषणाय प्रभवत्येकोऽपि कोऽपि गुणः ।
वसुधावलयमलङ्कृतमनवरतगुणेन पुरुषरत्नेन ॥१४॥
जननीजठरव्याधिर्बन्धूनामाधिरपगुणः पुरुषः ।
एतत्कृतो धरित्र्या भारो हरिणाऽप्यनपनेयः ॥१५॥
यदि गुणमिच्छसि फलिनं कुलमकलङ्कं मनो निरातङ्कम् ।
अतिदूराद् गुरुदोषं परिवर्ज्जय दुर्जनेषु परितोषम् ॥१६॥
पिशुनप्रणयी पुरुषो यदि न विनश्यत्यवश्यमेति भयम् ।
यदि सन्निहितं दहनो न दहति सन्तापयत्येव ॥१७॥
परपरितापनकुतुकी गणयति नात्मीयमपि तापम् ।
परहतिहेतोः पिशुनः सन्दंश इव स्वपीडनं सहते ॥१८॥
करलालितोऽपि दहति ज्वलति व्यजनेन वीज्यमानोऽपि ।
दहन इवानिर्वाणं न विमुञ्चत्युष्णतां पिशुनः ॥१९॥
वक्रं विचरन्नहिरिव विहितजगत्प्राणचर्व्वणः पिशुनः ।
मुदितः क्वचिदुपलब्धे परकीयच्छिद्र एव निद्राति ॥२०॥
परिहृतमसाधुवाचा प्राचामाचारगोचरं वर्त्म ।
सज्जनसमाजसेवनमेव नरेभ्यो निवेदयति ॥२१॥
मार्ज्जितपरमालिन्यस्तप्तोऽपि मनागनन्तरं शिशिरः ।
जलमिव सुजनः स्नेहं विनिहितमभितः प्रसारयति ॥२२॥
उपनीतनीतिनौकः संसारविकारवारिवन्यासु ।
सत्पुरुषकर्णधारस्तारयति जनान् बहूनेकः ॥२३॥

---

१४. प्रसर(का), गुणःसत्यम् (प). २३. रः (मा० रा०), बहूञ्जनानेकः (का).

परहितहेतोर्व्विहिताः सुहृदः स्वहिताहितान्यजानन्तः ।
उपविन्यस्तपदानपि नौका इव तारयन्ति परान् ॥२४॥

परिहृतपरापवादः परिमितवाक्परहितासक्तः ।
परिणतमतिपरिचर्यापरः पुरस्सरति साधुचरितानाम् ॥२५॥

प्राचां पथा प्रयत्नादाचर सञ्चारमन्यतो मा गाः ।
तत्रापवादपङ्के निःपतितं के नयन्तु बहिः ॥२६॥

यद्यधिरजनि शयानः सद्मनि सुखमीहते सुमतिः ।
योषामिव परपुरुषापवादपरुषां गिरं परित्यजतु ॥२७॥

यदि नाम किमपि गुह्यं निविडगुणस्यान्तरं वरस्य गतम् ।
निपुणं निगूढमेतच्चेतसि निर्व्यूढमाकलयेः ॥२८॥

स्थालीव खलस्तापादुद्वमति रसेन पिहितमप्यन्तः ।
अन्तःकोटरगुप्तैः सहैव शाखीव दह्यते सुजनः ॥२९॥

इदमस्खलितन्धारय वारय परुषाक्षरा वाचः ।
एकः सकलजनानां जगति रिपुः परुषवाक् पुरुषः ॥३०॥

परभृन्मौखर्य्यभिया पोषकमप्यात्मघोषमुत्सृजति ।
अतिमुखर एष सहते मुहुरतिदण्डाहतिम्पटहः ॥३१॥

परमुखरत्वज्वलितः करोषि मौखर्यमेव मेषोऽपि ।
पुनरपि तदेव कर्त्ता कः परिहर्त्ताऽनवस्थितिं युवयोः ॥३२॥

मुखसुखमिति यदि न त्वं परिहरसि परापवादपारुष्यम् ।
द्विगुणितहेतुः स कथं तवापवादान्निवारयतु वाचम् ॥३३॥

---

२६. चा (मा० रा०). पतति तं (का०प०), प has a च more. २७. ष (का) परयोषामिवपुरुषा (प). का & प omit परि. २८. का leaves first line blank. Is this for वयस्य! ?. २९. का leaves these two letters blank. ३१. ष (मा० रा०). ३२. का omits मेव. ३३. सुखमुख (का).

परिहर चापलमुच्चैरुच्चैःपदसंस्थितिस्थिरे मनसि ।
चिरमेधते न चपलश्चपलैव निदर्शनन्तत्र ॥३४॥

पुण्यानि सततमर्ज्जय परिवर्ज्जय पौरुषेषु वैमुख्यम् ।
पौरुषपुण्यविहीनः पुरुषो लोकद्वये दीनः ॥३५॥

परिचर मातरपितरावाचर नितरामभीप्सितान्यनयोः ।
संस्मृत्य जननजीवनलालनपरिपालनप्रणयम् ॥३६॥

परवित्तविमुखमन्तः परदारनिरीक्षणाक्षमं चक्षुः ।
हरिपरिचितस्य पुंसः परदूषणदूरवासिनी रसना ॥३७॥

न्यायोपनीतवित्तः परस्वपरिवर्जनप्रयतचित्तः ।
जीवति सुजीवितं तज्जीवनमरणन्तदितरस्य ॥३८॥

यद्युच्चैरसि न परानुपकुरुषे तन्मृषैव ते जन्म ।
यदि नैष जनितवर्षः को नाम पयोधरोत्कर्षः ॥३९॥

निरुपधिपरोपकारः कोऽप्युच्चैः स्थायिनाम्भारः ।
जगदमृतैरभिषिञ्चन्नञ्चति केनाभिसन्धिना चन्द्रः ॥४०॥

उपकाराय न जातः सपदि सुजातः क्व जातवैरेऽपि ।
ग्रासयति ग्रस्तोऽपि द्रोहिणममृतानि रोहिणीरमणः ॥४१॥

आचारमाचर चिरादालस्यमपास्य जात्युचितम् ।
लोकानुरागसाधनमाराधनमेतदेव हरेः ॥४२॥

अलमथवा बहुवादैर्विरचय लोकानुरागनिर्बन्धम् ।
तत्रैकत्र समग्रं तन्निहितं यन्न जातु सन्निहितम् ॥४३॥

उन्मदतया कयाचित्कदाचिदपथप्रवृत्तमपि पुरुषम् ।
सद्यःसुहृदुपदेशः सृणिरिव करिणं निवर्त्तयति ॥४४॥

दुष्टाः सुहृदुपदिष्टा द्विष्टा इव रोषरूक्षतां दधते ।
भेषजकारिणि पुरुषे परुषाः पशवः प्रकुप्यन्ति ॥४५॥

इति श्री हरिहरसुभाषिते सुहृदुपदेशप्रकरणम् ॥३॥

---

३४. का omits second उच्चैः and reads च्चैः पदसंस्थिति सुस्थिरे. प reads पदसंस्थिते स्थिरे। ३५. र्ज्यं (मा), ही (का). ३६. मा (का). ३८. वर्जित (प), जीवनं (का). ३९. पि (का). ४१. कु (का). ४२. जानीहि (रा), सुजना (रा). ४४. श्रृ (मा० रा० प०), णां (प०).

## प्रवासप्रकरणम् ॥४॥

धनमेव धरणिवलये कलयति सफलायुषं पुरुषम् ।
यदि जीवति धनरहितः कथय मृतः कीदृशो भवति ॥१॥

अकपर्द्दकस्य विफलं जनुरिति जानीमहे महेशोऽपि ।
शिरसि कृतेन कपर्द्दी भवति जटाजूटकेनापि ॥२॥

नीचस्याप्युत्कर्षो धनस्य नाम्नाऽपि जायते जगति ।
वदति वराटकयोग्यं जलाशयं यत् सरोवरं लोकः ॥३॥

को नाम नानुवृत्तिं सुमहानपि धनवतः कुरुते ।
वित्तेशभवनभित्तेस्समीपमुपसेवते शम्भुः ॥४॥

अपि नित्यानन्दमयं महः श्रियं वहति सन्ततं हृदये ।
कः साधारणपुरुषः प्रभवत्वेनामनादर्त्तुम् ॥५॥

दौर्गत्यकलुषितानां दूषगतामेव गच्छति गुणोऽपि ।
बिभ्राणो गुणमभजद्विषधरवत्तां दिगम्बरो देवः ॥६॥

धनवानपि गुणवानप्यभिजनवानप्यपौरुषः पुरुषः ।
शृङ्गारितमिव चित्रं न भवति पात्रं भयादरयोः ॥७॥

पौरुषविमुखः पुरुषः परहितपरुषश्च पौरुषमयोऽपि ।
अपि कृतपरोपकारः स्वकृतश्लाघी च लाघवं लभते ॥८॥

शोभामुपैति पुरुषः स्वजातिसदृशेन पौरुषरसेन ।
न ब्राह्मणस्य बलिशं सदृशन्न च धीवरेऽधीतम् ॥९॥

न क्षत्रिय इव योद्धा न वैश्यवत्कर्षणादिसम्पन्नः ।
विप्रः प्राप्नोति परं चिरं यशः प्रार्थनकृतार्थः ॥१०॥

निवसन्निजेऽपि भवने प्रभवति भरणाय यदपि भृत्यानाम् ।
तदपि न गुणवान् पुरुषःप्रवासविमुखः परादरं लभते ॥११॥

शयनाशनादिविधुरो भवति विदेशेषु चङ्क्रमक्लेशः ।
निर्द्धनभवननिवासप्रयासखेदस्य षोडशो भागः ॥१२॥

---

१. धनहीनो यदि जीवति (प०). ३. सत् (प). ७. व (का). ८. भजते (का).
९ वशेन (का०प०).

किं जीवति यच्छायामुपजीवति बन्धुवर्गस्य ।
तरुविटपप्रच्छन्ने प्रक्षिप तात ! क्षुपे नयनम् ॥१३॥

परदेशे पर्यटतो यापनमपि जन्मनः श्रेयः ।
कृतमुपचितस्य बन्धोर्म्मुखावलोकात् सुखाधिगमैः ॥१४॥

तावज्जीवति जन्तुर्य्यावद् भुङ्क्ते स्वयं समाहृत्य ।
पिण्डं परप्रयुक्तं प्राप्य प्रीणाति परिहृतप्राणः ॥१५॥

न्यक्कारमुदरभरणे लब्ध्वा राहुर्ज्जहावुदरमेव ।
उचितं केतुरहासीदमृतेऽपि कृतार्थनं वदनम् ॥१६॥

इच्छति मानी मरणं न च गच्छति वैरिणः शरणम् ।
मानक्षरणं मरणं मानप्राणस्य केवलं कृतिनः ॥१७॥

अपि जलकणान् पयोधेर्दूरादाहृत्य जायते जलदः ।
निकटाद् घटानपि शतं समीहरन् वारिहार्य्येव ॥१८॥

तत्तद्देशाचारश्रुतवेषवचो विशेषवैदग्ध्यम् ।
विदुषामिदं विभूषा-रत्नमयत्नादुपैति परदेशे ॥ १९ ॥

भ्रमतामुदेति जगतो वैचित्र्यविलोकनेन विज्ञानम् ।
यादृच्छिकानि पुण्यान्यनेकतीर्थाभिषेकजनितानि ॥ २० ॥

कलिकलुषसङ्कटाकुलकुटुम्बसंवलनखेदविकलस्य ।
प्रतिनिधिरिव प्रवासः संसारविरागसुखसमुद्रस्य ॥ २१ ॥

योषिदजनितापत्या नित्यापरिभूतवैरिणः क्षितिपाः ।
गुणिनो विदेशविमुखा न सुखाय भवन्ति बन्धूनाम् ॥ २२ ॥

नानानरपतिपरिषत्परिगणितगुणो जनो जगति ।
यज्जीवति तज्जीवितमितरत् किन्तन्न जानीमः ॥ २३ ॥

यदपि प्रवासगमनं जीवितसन्देहदोलिकारोहः ।
तदपि तदेव श्रेयो जीवनमरणादनुद्यमहतस्य ॥२४॥

---

१३. यच्छा (का), प (का). १४. सुखाव (का). १६. तो (रा). नामु (का).
१८ कुठ्य (प), न् (च). २१. मुखमुद्रस्य (का). २२. भवन्ति सुखाय (प).
२३. रं (प). २४. विवेश (प).

प्रवसन्त्वनलसमनसः परानुरागोन्मुखाः पुरुषाः ।
अलमलसैर्ज्जनविरसैश्चिरमपि परदेशदर्शिभिःपशुभिः ॥२५॥
शीतातपवर्षाणामुत्कर्षान् सम्भवे समपहाय ।
प्रवसेदसम्भवेऽपि प्रावृषि न प्रोषितो भूयात् ॥ २६ ॥
कः प्रेत इति प्रश्ने सदुत्तरे पान्थभक्षकं रक्षः ।
प्रादाद्धनमतिहर्षात् प्रेतं वर्षाध्वगं वदते ॥ २७ ॥
सद्वासरे सुलग्ने प्रमोदमग्ने च मङ्गलैर्म्मनसि ।
गरुडारूढस्य हरेः स्मरेत् प्रयातः पदाम्बुरुहम् ॥ २८ ॥
सति सम्भवे प्रवसति बहुदेशदर्शिभिर्ब्बहुभिः ।
ग्रामाद्ग्रामान्तरमपि जातु सचेताःप्रयाति नैकाकी ॥२९॥
विपदं प्रतिपदसुलभां कः प्रतिकुर्याद्विना सहायेन ।
एकाकिनो जगदिदं जनमयमपि निर्ज्जनारण्यम् ॥३० ॥
श्वेवायात्याहूतः शर इव संयात्यनुप्रहितः ।
मन इव हितनिहितात्मा सुकृतशतैःसेवको भवति ॥३१॥
शठमतिरलसप्रकृतिः प्राज्ञम्मन्यश्च लोलुपश्चपलः ।
अभिमानवान्निदेशाक्षेप्ता सप्तापि सेवका विपदः ॥३२॥
यानाशनशयनासनवेशाद्युपयोगिवस्तुविस्तारैः ।
सुखिनःप्रवसन्ति नराःप्रवसति कश्चित्कमण्डलुकरोऽपि ॥३३॥
कौपीनवानपि गतः श्रिया वृतः सम्यगेति सत्पुरुषः ।
श्रीमानपि प्रयातः कापुरुषः पुनरुपैति कौपीनी ॥३४॥
सति सम्भवेशयानः सुविदितगन्तव्यवर्त्मसंस्थानः ।
अनुचरजनहितकारी वन्याहारी भवेत्पथिकः ॥ ३५ ॥
तत्तत्पथपथिकक्रमसमुचितसञ्चारवासविश्रामः ।
पथि सञ्चरेदवहितः परिचयरहितेषु येषु तेष्वेव ॥ ३६॥

२५. विसरै (का). २७. ध्वगं (मा०रा०), प्रान्त (का). २८. मग्ने(का). ३३. खि (मा०रा०). ३५. वेऽश (प). त (मा०रा०) संस्थानः (प).

नापरिशीलितशीले सद्मन्यपि विश्वसन्ति विद्वांसः ।
परदेशेषु कराले कलिकाले कस्य विश्वासः ॥३७॥
शनकैः सन्तीर्णपथः पुरोपकण्ठे धरापतेर्द्धीरः ।
विश्रम्य विदितवासप्रदेशमस्मिन् प्रवेशमाचरति ॥३८॥
पुरतः पुरमपरिचितं न नीचवेशा विशन्ति विद्वांसः ।
प्रथमेक्षितामवस्थां यस्मात् सर्वे स्मरन्ति सर्वस्य ॥३९॥
नगरे नरेश्वरस्य प्रविश्य पुरतो विचीयते वसतिः।
आरामदेवमन्दिरवापीकूपादिरम्यविजनेषु ॥४०॥
नाचरति दूरदर्शी परदेशी पौरविपरीतम् ।
नापरिचितस्य सहते तनुतरमपि वैकृतं लोकः ॥४१॥
पुरतः परनगरगतः परिचयमासाद्य साधुलोकेन ।
निभृतेन भवति निपुणः सदसन्नृपभृत्यवृत्तविज्ञाने॥४२॥
सुविदितसकलविशेषः समुज्ज्वलैरनुचरै रुचितवेषः ।
अभिगत्य पश्यति पुरः पुरस्कृतं नरपतेर्द्धीरः ॥४३॥
निजदेशकुलाख्यानामाख्यानाननुगुणान् विनयी ।
ज्ञापयति नृपतिदयितं सुभाषितैराहरन् हृदयमस्य ॥४४॥
सदवसरे सप्रणयं प्रागेव निवेदितः प्रभवे ।
नीतो नरपतिपरिषत् पुरस्कृतेनोपसर्प्पति नरेन्द्रम् ॥४५॥
गुणजातिसमयसवसामनुरूपेणोज्वलेन वेशेन ।
करचरणवदनचिकुरादिभिरुज्वलितैरुपैति नरपालम् ॥४६॥
गुरुणा गुणानुबन्धाल्लघुरपि नीतो निमज्जनमुपैति ।
उपलनिबद्धालाबूनिचय इवान्तर्जडाशयस्यापि ॥४७॥
परिषदमपरिचितां च प्रविश्य धैर्य्यापवर्जितातङ्कः ।
आशीःपद्यविशेषं विचिन्तयन् वीक्षते क्षितिपम् ॥४८॥

---

३९. विनीतवेशा (प). ४३. रनुचित (का), पुरःपश्यति (प०). ४४. व (का).
४५. यः (का). ४६. वयसा (प०). ४७. जडस्यापि (का०प०). ४८. चिन्तितो (प०).

सुललितफलादिवलिताञ्जलिरुपयातो नृपासनसमीपम् ।
विनयगुणावनतवपुर्विकासिमुखमाशिषं ब्रूते ॥४९।
आमेरुमलयमूर्वीवलयमलङ्कृत्य कीर्तिकर्प्पूरैः ।
मङ्गलमाप्नुहि नित्यं गुणमय! जय जीव यावदादित्यम् ॥५०॥
उपविशति नृपनियुक्तः केनचिदन्येन वा जनेनोक्तः ।
निजवेशजातिसमुचितमासनमालोक्य सेवते सुमतिः ॥५१॥
परिषज्जनोपवेशनविन्यासविशेषसदृशमुपविष्टः ।
सति सम्भवे समीपं सम्मुखमपि सेवते नृपतेः ॥५२॥
क्षणमपसारितसाध्वसमुपविश्य सतां विलोक्य वदनानि ।
परतः स्वतोऽपि वा स्वं वचनावसरं प्रवर्त्तयति धीरः ॥५३॥
आवर्ज्जित इव विनयादीषन्मधुरस्मिताननसरोजः ।
अङ्कार्प्पितकरयुगलः कलयति विज्ञप्तिमीक्षितो नृपतेः ॥५४॥
जीवतु चिरं नरेन्द्रः किञ्चिदुपन्यस्तुमस्ति मे वाञ्छा ।
इत्यादि वागुपक्रमकुशलोऽवसरे सुभाषितं ब्रूते ॥५५॥
निःसाध्वसमतिमधुरं स्पष्टाक्षरमुन्नतग्रीवम् ।
बहुधा व्यवहितसमयानुचिन्तितं पाठ्यमाशिषाम्पद्यम् ॥५६॥
वर्ण्यो बलिरिव दाने सुरगुरुरिव विश्वविज्ञाने ।
अमरेश्वर इव समरे स्मर इव शोभासु भूपालः ॥५७॥

**इति श्री हरिहरसुभाषिते प्रवासप्रकरणम् ॥४॥**

---

४९. क (का०). ५०. मु (मा). ५३. वाङ्मयरचनावसरं (प).
५४. प्सु (प), क्ष (का).

देव! त्वन्नेत्रपाथोरुहसहचरणादस्तु पद्मा सपद्मा
वाग्देवी सत्कवीनां विशदयतु दिशो वीर! युष्मद्यशोभिः ।
सन्तु द्वीपास्त्वदोजः प्रतिनवतपनैरेव सप्तापि तप्ता
भूयात् त्वद्वैरिनारीनयनमृगमयी भूधरारण्यभूमिः ॥१॥

साम्भोदर्भतिले भवत्करतले* मेरौ भयोत्कम्पिनि
ब्रूमः किं वयमेष देव! भवतो भव्याय दिव्याशिषः ।
प्राप्य प्रार्थनयाऽप्यलभ्यमसकृत्त्रस्यत्प्रियालिङ्गनं
स्वर्गेऽप्युत्पुलकाङ्कुरैस्त्वयि सुरैराशीःपरैर्भूयते ॥२॥

भूमीपाल! भवत्कृपालव इवोपासन्नकल्पद्रुमः
श्रीमत्सैन्यवदन्यजित्वरपुरोद्दाहस्फुरत्साहसः ।
युस्मद्वैरिवदुज्जटो गतपटो भिक्षावशस्त्वद्यशः
कर्प्पूराचलवत् सितस्तव हितः कोऽप्यस्तु लोकस्तुतः ॥३॥

गङ्गोत्सङ्गवलन्मृणालशकलप्रत्याशयोद्यत्करं
भोक्तुं मुग्धहृदि क्षपाकरकलां लम्बोदरे धावति ।
सद्यस्त्वद्यशसि स्वयं गिरिभुवा गीते पुरः प्रोच्छल-
न्द्धावल्यतिरोहिते हिमकरे हृष्टो हरस्त्रायताम् ॥४॥

भुज एव तव क्षितेर्न्निवासस्त्वदपाङ्गे कमलालयाविलासः ।
सुखलब्धवधूद्वयीसमाजस्तव चित्ते हरिरस्तु भक्तिभाजः ॥५॥

यौष्माकीनयशोनिशाकरशते नित्योदिते मुद्रिते
नाभीपल्वलपङ्कजे मुररिपोरन्तर्हिते ब्रह्मणि ।
निःप्रत्यूहमहन्यपि च्युतचिरव्रीडाभरम्भूतयं
भूयादब्धिभुवो रतोत्सवरसव्यासङ्गमग्नम्मनः ॥६॥

---

१. यशो (का); संतापितप्ता (का), भि (प); त्त (का), वैरिणीनां (प).
२. Ms. वी begins here* on the 16th. folio. त (प).
४. द्धावल्येन (वी). ६. न (का), यं (का), भूयते (का), लग्नं (का).

यैत्रीचन्द्राभचन्द्रातपतलचकितोच्चिसञ्चञ्चञ्चमूरु-
प्रोदञ्चल्लोचनानां चतुरकरचलच्चामरोच्चारिचेल: ।
न्यञ्चच्चामीकराच्चा[illegible]चिरमुखस्त्वं चिरं चारुकीर्ते-
र्वीचीनाञ्चाकचिक्यञ्चतुरुदधिचरांश्चारयोच्चैश्चकोरान् ॥७॥

निर्णीय त्वत्प्रतापज्वलनसमुदयं किं द्रवीभावभीत्या
ब्रह्मा ब्रह्माण्डमेतत् कनकमयमधाद् वीर! वारिण्यपारे ।
अस्याप्यन्तस्तडागावलिमनवरतान्निर्झरान्निम्नगानां
लक्षं सप्ताम्बुराशीन्व्यधित निरवधीनुन्मदानम्बुवाहान् ॥८॥

त्वदरिपुरपुरन्ध्रिभि: प्रतापज्वलनमुपेतमुदीक्ष्य तावकीनम्
कति कति न समन्तत:क्रियन्ते प्रतिभवनं नयनाम्बुभिस्तटिन्य: ॥९॥

त्रैलोक्यत्राणलक्ष्मीश्शतमखकुलिशं श्रीपतेश्चापि चक्रं
काले काले श्रयन्ती क्वचिदपि न पदं कुर्वती निर्वृताऽभूत् ।
एषा शेषाहिभोगोद्भटभुजभजनश्रीभरभ्राजमाने
स्थाने युष्मत्कृपाणे स्थिरतरवसतिर्वीतहृद्द्वैतमास्ते ॥१०॥

नित्याक्षीणकले निरङ्कधवले युष्मद्यशोमण्डले
व्योमारोहिणि रोहिणीपतिरतिव्यर्थोऽभवद् भूपते !
एतस्य प्रतिकारमेष महतो वैरस्य वीराचरन्
वीक्ष्य त्वां मुदिता: परेषु वनिता: सन्तापयन् भ्राम्यति ॥११॥

त्वत्कीर्त्योपकृतं न किं नरपते ! वन्यस्थितौ वैरिणां
यद्वासांसि मलीमसानि धवलस्फीतन्त्यधौतान्यपि ।
ज्योत्स्नन्त्याशु तमांसि चन्दनरसक्षोदन्ति पङ्कच्छटा
मृद्भाण्डान्यपि राजतन्ति परित: सौवन्त्यरण्यान्यपि ॥१२॥

---

७. लि (प), रुचिरराचि (प). ८. स्यना (का), न्य (मा०का). १०. का and प्र both omit this verse. ११. पि (प), त्वामुदिता: (म). १२. न (का) हृ (वी) ; रण्य (का) रम्य (?) (वी), ल: (वी).

यैर्युष्मत्करवालकालदशनोत्कृत्तैरिहैकक्षणे
कीर्णा भूमिरियं भयङ्करतरैरेतैरुपेतैर्दिवम् ।
नीरन्ध्रं परिपूरितासु परितो रथ्यासु मिथ्याभय-
व्यग्रैः स्वर्गिभिरर्गलाकुलगृहद्वास्थैरवस्थीयते ॥१३॥

त्वदसिदलितदेहैरेकदैवोत्पतद्भि-
र्व्यरचि विधुरवर्गैश्चालनी चण्डरोचिः ।
अहमहमिकयाऽस्मिन् दिग्वधूभिर्विधूते
धरणिरजनि जुष्टा कीर्त्तिपिष्टातकैस्ते ॥१४॥

किङ्कौन्दी कन्दुकाली किमु कमलकुलं किन्नु वा कृत्तिवासाः
कार्त्तिक्याः कौमुदी किं कमलकुतुकहृत् किं कलानां कलापः ।
किंस्वित् कर्पूरपूरः किमु कुलिशभृतः कुञ्जरः कञ्जदृष्टे !
कश्चित् कश्मीरजन्मा किमुपलनिकरः कीर्त्तयः किं त्वदीयाः ॥१५॥

नरेन्द्रमन्ये निगदन्तु देवं मया दयादक्षिण ! दृष्टमेवम् ।
द्वीपायिते दानपयःपयोधेः पृथ्वीतले कल्पतरोः प्ररोहः ॥१६॥

संनिविश्य मनसा क्षितिप ! त्वां
सैन्धवेषु समशोधि विरोधः
येन ते चिरदरिद्रकुलेषु
ग्रासवासविकलेषु पतन्ति ॥१७॥

इह तव देव ! निपतता करकमलकुशोदकेन जायन्ते ।
तत्तद्दूरदरिद्रद्वारि द्विपदानवारिभिः सरितः ॥१८॥

प्राप्तास्त्रासात् पिपासातिशयमुपगताः पातुमारण्यमम्भो
युष्मद्विद्वेषियोषाः श्वसितसमुदयैस्तत्तदीयैरशोषि ।
एतत् संवीक्ष्य मूर्छानिपतिततनवो नैव जीवेयुरेता-
श्चेन्नोपेताः शबर्यो निजनयनजलैः पल्वलं पूरयेयुः ॥१९॥

---

१३. मुपचितो (का), द्वाः (का). १४. क (प), पु (का). १५. का omits this verse. ष्टेः (प०), का (प०दी). १६. मेव (का), द्वि (का), दी (का)१८. (तु) (का). १९. षा (प), ते (प), चे (प),ता (मा० बी).

वीर! त्वद्वैरिदारा गहनगिरिमहागह्वरान्तस्तमिस्रं
त्वत्त्रासाद्गुप्तवासा दरकलितहृदो यद्यदेव प्रपन्नाः।
तत्तज्ज्योत्स्नायमानं धरणिपरिवृढ! प्रेक्ष्य युष्मद्यशोभिः
सद्यो मोहान्धकारानुसरणशरणा वासरान् वाहयन्ति ॥२०॥

भृङ्गारेण मणीमयेन करकं क्षौमेण वल्काम्बरं
पट्टीयप्रकरेण बर्हनिवहं हारेण गुञ्जावलीम्।
इत्थं प्रार्थनया कया न भवतो वैरिस्त्रियो वस्तुभिः
क्रीणन्त्यात्मविनिह्नवाय चकितं चिह्नान्यरण्यस्त्रियाम् ॥२१ ॥

निभृतमुषितैर्योषिद्वृन्दैर्वनान्तलतान्तरे
प्रतिदलततिच्छिद्रे छिद्रार्पितेषु भियाऽक्षिषु।
शिव शिव! मृगीयूथभ्रान्त्या समीपमुपागतान्
दधति हरिणान् हस्तैर्ज्जीवातवे तव शत्रवः ॥२२॥

गान्धारा गुप्तदारास्त्वयि चलति गलद्बाष्पधारा विहारा
गाढास्त्रासावगाढाः क्षितिपकुलमणे! गूर्ज्जरा जर्ज्जराशाः।
तैलङ्गास्त्यक्तसङ्गास्त्रिभुवनतिलक क्लिश्यदङ्गाः कलिङ्गा
मोरङ्गा मुक्तरङ्गास्सपदि समभवन् वीरबङ्गा विहङ्गाः ॥२३॥

काम्बोजाः कम्बुजन्माकरशरणकृतस्सह्यकान्तारकच्छान्
विच्छायाः कच्छनाशा विदधति कतमे कामरूपाः कुरूपाः।
कुर्वाणे त्वय्यकस्मात् करकमलहृतं कार्मुकं कूर्मपृष्ठो-
त्कृष्टं कर्णान्तकृष्टं नरपकुलमणे कर्णमाकर्णयन्ति ॥२४ ॥

---

२०. गु (प), स्थमित्रं (का), दव (का०प०), वनि (वी), न (मा० रा०), २१. ही (का), न (मा०रा०प० वी० ) ह (मा०वी०), ड़ (का० प). २३. गु (का०प०), र (का). २४ दूम (?) (मा०रा०), का omits this verse. हान् (प), कृ (प० वी).

उर्व्वीङ्गुर्व्वीतिमुर्व्वीधर लघय शरैर्व्वैरिवर्व्वीर्य्यं गुर्व्वी
स्वर्व्वीथीर्व्वीतदर्व्वीकरनिकरमदैर्व्वीरकुर्व्वीति गुर्व्वीः ।
खर्व्वी कुर्व्वीत कोऽन्यस्त्वमिव रिपुचमूर्व्वीजितैर्व्वैजयन्त्याः
कुर्व्वन् दुर्व्वीक्ष्यमोजो निजमितर धनुर्व्वारणैर्व्वीतिहोत्रम् ॥२५॥

वीराणामेष गन्ता नगरमयमरीन् सम्मुखानेव हन्ता
सद्यो भेद्यं ततस्तैर्वत रुचिरमिदं मण्डलं चण्डभासः ।
मत्वैतन्मेदिनीयं प्रतरुणकरुणोत्कम्पिता त्वत्प्रयाणे
सेनाधूलीवितानाञ्चलतलविचलद्बिम्बमेनं विधत्ते ॥२६॥

त्वत्सैन्ये धरणीमणे ! प्रचलति प्रोत्पीडमर्म्मान्तरे
कूर्म्मे द्राक् परिवर्त्तिनि क्षितितले व्यावर्तमाने ततः ।
वार्द्धेर्वारिभरे वहिर्विगलिते मैनाकपक्षक्षतिः
किं न स्यात्स न चेद् भवेद् विकलदृग्धूलीभरैर्व्वासवः ॥२७॥

यौष्माकीने प्रयाणे प्रचलजलनिधिप्रोच्छलद्वारिपूर—
स्नातैर्न्नालम्भि तोयप्लुतधरणिगतैर्द्धूलिरुद्धूननाय ।
सेनारिङ्गत्तुरङ्गावलिवलितखुरोद्धूतधूलीवितान—
व्याप्ताङ्गैर्न्निःप्रयत्नं स्थितमतिसुखितैर्द्दिग्गजग्रामणीभिः ॥२८॥

भूमीपाल कृपालवस्तव हृया द्राग्दीर्णतायाः भया-
दुल्लङ्घ्यैव गिरीनटन्त्यघटितैश्चापाञ्चलैश्चञ्चलैः
क्षुद्रा क्षोणिरमीभिरुत्कटतरैः क्षुण्णा क्षणान्मास्त्वितो-
धावन्त्यम्बरमेव चत्वरमनुप्राप्यान्तराप्यायिताः ॥२९॥

---

२५. का omits this verse—This is a strange letter in वी; मा, रा, and प has व or र. The same with this also; प has दो. त (प), र्व्वीन् (प), न्स्या (प), य (प), व (वी०प०). २६. ग (प). २७. त (का), वे (का०प०), च (का) म (प). रः (का). २८. णे (का) स (रा), ल (का), पुवि (वी). २९. भ्र (प), स्ता (प), न (का), स्थिर्यं स्फुरत्खुरपुट (का), रैं (मा० रा०) न्तास्त्वितो (प), पिना (प).

इन्द्रो निन्दति वाहमाह दिनकृत्वर्व्वा च मेवाव्वंत-
श्चञ्चून्यंञ्चति किं न पन्नगरिपोरन्तस्त्रपोद्रेकतः ।
वातः खञ्जति पङ्गुपुञ्जति मनोराजिर्भवद्वाजिषु
द्वेषावाजिषु वैरिणामभिमुखं धावत्सु यावत्सुखम् ॥३०॥

यान्तु क्वामी समीराः क्षणमपि च मनः कुत्र नः स्पृष्टपृष्ठं
तिष्ठन्त्वेते सहस्रं मम पथि गिरयः को रयस्यापकर्षः ।
किन्नश्छिन्नम्पतेयुर्य्यदि जलनिधयः सर्वतः सन्निकर्षान्
ह्रेषा हर्षान्नृपैतत्त्वयि जिगमिषति व्याहरत्येष वाहः ॥३१॥

समुद्रावधि क्षुद्रभावन्दधाना कुतो भूर्य्यतोऽभीष्टवेगो विनष्टः ।
हयैर्म्मन्युनेवामुना हन्यते किन्धरा निर्भराहङ्कृतैः पद्भिरेव ॥३२॥

दृष्ट्वोदञ्चत्कुथान्तान् धरणिप! करिणो धावतस्तावकीनान्
किं भूयो जातपक्षाः क्षितिवलयमिदं क्ष्माभृतः क्षोभयन्ति ।
इत्युद्भ्रान्तः प्रधावेदमरपरिवृढः स्यान्न सद्यः शची चेत्
भेरीभाङ्कारघूर्णत्कनकगिरिशिरःस्थायिनी स्थापनीया ॥३३॥

श्रृङ्गेणैकेन हेम्नः कथमयमभवन्मेरुरग्र्यो गिरीणा-
मित्येनञ्जेतुमेतत्पुहिनगिरिरसौ श्रीमतः सौधभावम् ।
आकीर्णः स्वर्णश्रृङ्गैः सुललितकलशव्याजतो जायमानै-
र्युष्मत्सेवानुरूपं विभवमलभत क्वाफलस्त्वत्प्रसादः ॥३४॥

क्रान्ताः कान्तारदेशाः कति कति कुसुमैः कौन्तली कुन्तलीयैः
कार्णाटी केलिवाटीकृतकमलकुलैः कौङ्कणी कङ्कणैश्च ।
काश्मीरीकश्मलाञ्चत्कुचतटकलितैः कुङ्कुमैः कङ्कपत्रे
काण्डे कोदण्डदण्डस्पृशि तव निशिते शङ्कते भूधरेश ॥३५॥

३०. गुर्वाचमेवावंतः (का), स्वर्व्वाचमेवावृत(प), त्वर्वाचमेवाव्वंत (बी), ञ्चु (का), मा (का). ३१. न (का०प०), मन्तः (प), पृ (बी). सम (का), व (का), न्प्र (का), र्षा (प), नुपेतः (प). ३२. वा (का), नै (प). ३३. ष्टो (का), कः (का), न्ताः (का), न्य (मा०रा०). र (मा०रा०बी), स्ता (मा०रा०). ३४. तं (का), त (प) गं (का), मा(प).३५. का omits this verse. ह्य(प), कङ्कणीयैः(प), तैः(प), ङ्कि(माराप).

आ:शक्तिःशक्तिनाथ त्वदुरुबलदसिव्यक्तिसंसक्तिरिक्तां
निर्य्यूक्तिर्व्वक्ति सूक्तिव्यतिकरवशतो भुक्तिमुक्तिप्रसक्तिम् ।
यद्भक्तिर्वक्ति सक्ति परनृपतिपरित्यक्तिरस्य व्यनक्ति
द्वेषप्रव्यक्तिरक्तिः क्षणमपजनितामुक्तिपंक्तिं युनक्ति ॥३६॥

प्राप्ता वासकसज्जतां प्रथमतो योद्धुं त्वयोत्कण्ठिता
योधास्तेऽभिसृता मनागरिचमूस्स्वाधीननाथा स्थिता ।
भीत्या प्रोषितभर्तृका समभवत्त्वत्सायकैः खण्डिता
दूरादन्तरिता विधाय कलहं हा विप्रलब्धा विधेः ॥३७॥

शृङ्गारस्त्वमसि क्षितावरिबले वीरः परेषां पुरे
रौद्रो दीनहृदामुदारकरुणस्तैस्तैर्गुणैरद्भुतः ।
हास्यो नित्यमदातुरङ्गदलने बीभत्स एव द्विषां
दुर्वृत्तस्य भयानको नवरसः शान्तोऽर्थिसन्तोषणे ॥३८॥

प्रामाण्यं परतः स्वतोऽपि भवतो विज्ञायते सन्मते
भूमीन्दो ! भवता क्षणस्थिरतया वर्णाश्चिरं स्थापिताः ।
सर्वज्ञैकसदीश्वरोऽपि न परं ब्रूते भवानीश्वरं
तन्नैयायिकनायकस्य भवतो मीमांसकत्वं कुतः ॥३९॥

स्वतः प्रकाशो मनसो महत्त्वं
धर्मेषु शक्तिर्न्न तथाऽन्यथाधीः ।
भूपाल गोपालपदैकभक्ते-
रन्यैव नैयायिकता तवेयम् ॥४०॥

शक्तिःप्रमापयति वीर तवोपमानं
प्रामाण्यमाप्तवचनेषु परैव जातिः ।
जातौ गुणागुणगणाश्रयिणो विशेषा
वैशेषिकं किमपि दर्शनमद्भुतन्ते ॥४१॥

---

३६. का omits this verse. रण (प), म (?) (वी), वक्तृ (प), पि (प वी).
३७. प्रथमतस्त्वांयोद्धुमुत्क. .(का), मृ (का), श (का), प्री (प). ३९. स (प),
४०. र्वं (प). श्च (का) र्ण्ण (मा॰रा॰), श (वी). ४१. क्तिम् (मा॰ रा ), तो (वी).

त्वद्वाणेषु यमो जयेषु नियमो याने स्थिरं चासनं
श्रान्तौ श्वासविनिग्रहो गुणगणे प्रत्याहृतिः श्रीमतः ।
ध्यानं शूलिनि धारणा च धरणौ धर्मे समाधिर्यत-
स्तन्निर्व्विण्णहृदः किमीश्वरपरे वाञ्छन्ति पातञ्जले ॥४२॥

एकं वस्तु यदस्ति नित्यनिबिडानन्दप्रबोधात्मकं
सत्यं तत्त्वमसीति वाक्यमखिलं त्वय्येव विश्राम्यति ।
त्वामाकर्ण्य न किञ्चिदन्यदवनीशृङ्गारमन्मन्यते
त्वय्याप्ते जनकादिकीर्त्तिजनके किं ज्ञानमीमांसया ॥४३॥

गुणास्ते निःक्षोभाः प्रकृतिरियमाधत्त भवतो
महत्तत्त्वन्तच्चाप्यजनयदहंकारमुचितम् ।
कृतं तेनाप्यूर्वीरमण गुणमात्रार्जनमितः
स्फुरत्कर्म्मज्ञानेन्द्रियसचिवमुर्व्यादिकमभूत् ॥४४॥

इति श्री हरिहरसुभाषिते राजप्रशस्तिप्रकरणम् ॥५॥

---

४२. ध्यायन्ति (का). ४३. दि (मा), ममला (प), स(मा रा प)?
४४. णे (मा दी), प्यु (का), सूर्व्या (का).

## राजोपासनप्रकरणम् ॥६॥

स्वस्याथवा परस्य द्वित्राणि मनोरमाणि पद्यानि ।
आख्याय व्याख्येयान्यव्यग्रं मधुरमग्रतो नृपतेः ॥१॥

विद्वानयमितरोवेत्याख्यानव्याख्ययोरेव ।
प्रांयः प्रथमे पद्ये परीक्ष्यते परिषदा पुरुषः ॥२॥

पद्यप्रसङ्गसङ्गतमथान्यथा वापि किञ्चिदवतार्य ।
स्वाधीतदर्शनोक्तं युक्तं विद्वानुपन्यसति वस्तु ॥३॥

यावद्वचनावसरं ब्रूते मधुरं निराकुलं सदसि ।
पश्यन्नरपतिवदनं तिष्ठति तदनन्तरं धीरः ॥४॥

नासम्मतमभिदध्यादध्यास्य सदः प्रभुत्वमत्तस्य ।
यावन्नरपतिरुचितं वक्तुमपर्याप्तमप्युचितम् ॥५॥

पृष्टे ब्रवीति हृष्टे हर्षमुपायात्यवादिते मौनी ।
नृपसदसि नोचितामप्यसम्मतो वाचमुद्गिरति धीरः ॥६॥

उत्थाने सभ्यानामुत्तिष्ठति याति तेषु यातेषु ।
मतमन्तराऽपि राज्ञो विज्ञायाशीःप्रदो बहिरुपैति ॥७॥

प्रत्यहमेवमुपास्ते सदवसरे सम्मतो नृपतेः ।
नाज्ञातनृपतिसम्मतिरुपसर्पति सन्निधिन्तस्य ॥८॥

नानवसरे नरेशं सुखयति पुरुषः प्रियोऽपि समुपास्य ।
दिवसे न शीतधामा तामादरणीयतां लभते ॥९॥

मङ्गलनिलयो भूयाश्चिरमवनीं पालयन् जीयाः ।
जयभूमिचक्रशक्र ! स्वस्तीत्याद्याशिषः पुरो वाच्याः ॥१०॥

---

१. मनोहराणि (का) नि (मा रा प). ३. न (मा दी) ४. स (का).
५. त्त (का), त्व (का). ६. तां (प). ८. स्त (का). ९. प (मा).
१०. स्वस्तीत्याशीःपुरो वाच्या (प).

राजाशिषोऽवसाने द्विजा नरपालपूजिताः सुधिया ।
नत्याशीर्भ्यां सभ्या यथोचितं परिचितेन परितोष्याः ॥११॥
नोच्चैर्न्न चातिनीचैर्न्न सभामध्ये न हीनसम्बन्धे ।
न नृपासनास्त्रवस्त्रस्पर्शेऽपि विशन्ति विद्वांसः ॥१२॥
अत्युच्चैरतिनीचैरश्लीलमयुक्तमनुपयुक्तञ्च ।
न वदति नृपतिसभायामादरमीप्सुर्म्महात्मनसाम् ॥१३॥
नृपसचिवसङ्कथायां सङ्गतमपि नाभ्युपेत्य वक्तव्यम् ।
अनधिकृतभाषितायां वाचि विचित्ता भवन्ति धनमत्ताः ॥१४॥
अनुरञ्जय राजानं मा जानन् जातु कोपयेः प्रकृतीः ।
एतद्द्वयानुरागस्थिरया तिष्ठ प्रतिष्ठयाश्लिष्टः ॥१५॥
गुणवसनभूषणाद्यैर्ल्लभतामलमादरं नृपतेः ।
प्राप्नोति प्रियवेदी नेदीयानवसरेषुसौभाग्यम् ॥१६॥
बहुवाक्पौरविरुद्धो बद्धस्पर्द्धो जनेन हीनेन ।
स्वमुखेन याचमानः स्वगुणश्लाघी च लाघवं लभते ॥१७॥
उल्लङ्घ्य सरिदरण्यग्रामगिरीन् कामकातरा यान्तु ।
अभिसारिण्य इवान्तस्तृष्णां निगदन्ति न स्वयं सुधियः ॥१८॥
वेशः स एव सगुणः स द्रविणोपार्ज्जनोपायः ।
यत्र स्ववंशविद्यासदृशी न विशीर्यते कीर्त्तिः ॥ १९॥
अभिलषति न खलु पुरुषः श्रियमपि कीर्त्त्या विनाकृतां कुशलः ।
क्षणिकाय वस्तुने कस्त्यजतीह चिरस्थिरं श्रेयः ॥२०॥

---

११. विप्रा (प) सन्तः । सुधिया (प), प omits परि, का leaves many letters blank and has यथोचितेन. १२. द्वे (दी), वसन्ति (का) विद्वांस उपविशन्ति (प). १३. नु (का), म (का). १४. ति (का) तोक्तायांवै (प), १५. य (का), तीन् (रा प का), द्व (मा रा), ष्ठा (मा रा). १६. सुसौ (मा का दी). १७ क्यैर (का), भजते (का दी). १८. निन्दन्ति (प), नैव विद्वांसः (प).

राजा न जातु मित्रं सेवामेवाचरद्भिरपि वेद्यः ।
आजन्मलालितेन द्विजो रजोऽन्धेन भोगिना दष्टः ॥२१॥

लघुरिति न भूमिपालो बालोऽप्यालोक्यते विदुषा ।
भसिताचितेऽप्युदीते दहनकणे सा हि दाहिका शक्तिः ॥२२॥

कृतमन्त्रिमनःक्वाथो लक्ष्मीनाथोऽपि नरपतेर्दयितः ।
कण्ठे कुण्ठकुठारप्रहारतः प्रापितो मरणम् ॥२३॥

उचितामुपास्य रुचितामभिधेहि गिरं निरन्तरावहितः ।
अप्यायतिमतिपुरुषे प्रभुणा कलुषेण भूयते कथिते ॥२४॥

अन्धा इव बधिरा इव मूका इव मोहभाज इव ।
पङ्गव इवानभिमते नृपतेर्निवसन्ति साधवस्सदसि ॥२५॥

तालज्ञा इव तरला यथा यथा नर्तयन्ति धनमत्ताः ।
नृत्यन्त्यपरिस्खलितास्तथा तथैवार्थिनः कृपणाः ॥२६॥

आशापाशनिबद्धो नृत्यति किं वा नरो न धनिकपुरः ।
हतशैलूषस्य विधेः कुत्र विधेयः सुखमुपैति ॥२७॥

अलमात्मीयं विदितं विदितं धनिकस्य याचकोऽवहितः ।
चन्द्रं ब्रवीति चटकं वटकं चन्द्रं च लोभलोलमनाः ॥२८॥

अमृतायतामिति वदेत् पीते भुक्ते क्षुते च शतञ्जीव ।
छोटिकया सह जृम्भासमये स्यातां चिरायुरानन्दौ ॥२९॥

अल्पेऽपि नृपतिदत्ते प्रतिश्रुते वापि दातुमेतेन ।
उत्थायाशीर्देया क्वचिदुपविश्यापि परिषदौचित्यात् ॥३०॥

यदि नामासङ्गतमपि सङ्गमयितुमस्ति कौशलं वचसि ।
प्रस्तावे स्तुतिमाचर सुखहरणोयोऽनयैव नरपालः ॥३१॥

---

२३. कठिन (का). २४. आ (प) यं ? (मा रा). २६. ता (मा बी) मा बी and रा omit second यथा २८. र (का). २९. बी omits च. ३०. त्याः (का).

किं सम्यगिति प्रश्ने भीष्मः स्तोत्रं श्रियः पतेः प्राह ।
स्तव्यस्तेन श्रीमान् कस्य न वा वल्लभा स्तुतिर्भवति ॥३२॥

सङ्कथनमप्यनर्हं पश्यति नृपतौ परेण केनापि ।
स्तुत्याशीर्न्नत्यादेः कैवान्यस्मिन् कथाऽपि तत्पुरतः ॥३३॥

राजनि परानुरागग्रन्थिं श्लथयन्ति सन्ततं पिशुनाः ।
एषामिहावकाशो रेखा-सदृशोऽपि वर्ज्यते विदुषा ॥३४ ॥

क्षुद्रोपद्रवभीत्या न त्याज्या राजपरिषदः पुरुषैः ।
कण्टकभेदादिभिया सुधिया केनापि मुच्यते देहः ॥३५॥

कुलशीलपौरुषादि-प्रख्यातयशोविशोभिजन्मानम् ।
धनवन्तमधनमपि वा रञ्जय राजानमुन्नतारम्भम् ॥३६॥

नीचसचिवसंघृष्टं धनसञ्चयलुब्धमल्पसन्तुष्टम् ।
धर्मपथादपरक्तं वृथा विधायाऽपि नृपतिमनुरक्तम् ॥३७ ॥

यद्यसि गुणसमवहितो विहितोचितपौरुषप्रणयः ।
क्षुद्रक्षितिपसभायामाचर नायासमुपविश्य ॥३८ ॥

त्यागी वरमल्पधनः कुबेरकल्पेन किं कदर्येण ।
उदधेरलभ्यपयसः सुलभजलं पल्वलं श्रेयः ॥३९॥

अलमथकथनसहस्रैर्न्नरपतिगुणदोषतारतम्यस्य ।
द्रविणार्प्पणे समर्थः सेव्यो राजेति परमार्थः ॥४०॥

शास्त्रार्थव्याख्यानैर्द्धर्म्मकथाभिर्नयाख्यानैः ।
ललिताभिः कविताभिः प्रसङ्गतः प्रीणयेन्नृपतिम् ॥४१॥

इति श्री हरिहरसुभाषिते राजोपासनप्रकरणम् ॥६॥

---

३२. तः (का) व्यमस्तो (मा रा प दी), तिः (का): ३३. स्तु (मा का दी) के (प) का (का): ३४. का has letters blank, षा (मा रा). ३५. ष्ठ (मा रा). ३६. वस्य (प). ३७. दा (प). ३८. णा(मा)माचारणया (का).

## राजनीतिप्रकरणम् ॥७॥

विज्ञाय नीतिमन्तं श्रीमन्तं सेवते सुमतिः ।
अनयप्रणयिनि राजनि नाजनि कुत्राऽपि कल्याणम् ॥१॥

अत्युपचितैरुपायैश्चक्रभृदेको भुजैरिवचतुर्भिः ।
नृपतिः श्रियमपि सुचिरं हरिरिव परिरभ्य निर्भरं रमते ॥२॥

साम समे सुमतीनामधिके दानं रिपावुचितम् ।
भेदः सर्वत्र हितो विहितो विजयाय विग्रहः कृतिनः ॥३॥

समकक्षे प्रतिपक्षे साम्ना सुखमेधते सुमतिः ।
अन्यत्र सामकामः पश्चात् परितप्यते नृपतिः ॥४॥

साम्नान्वितोऽपि बलवान् जलमिव वह्निं विनाशयत्यबलम् ।
तस्माद्बलवति सामध्यानमलं मन्यते सुमतिः ॥५॥

वदतोऽपि प्रियवचनं रुदतोऽपि हि कण्ठमाश्लिष्य ।
शपतोऽपि दैवतशतैर्न्न भवति विद्वान् वशे द्विषतः ॥६॥

रणपतितस्य मुखान्मे श्रृणोतु भूपो रिपोर्धनं गुप्तम् ।
इत्याहूय समीपं हतो हतेनापि हत-नृपो येन ॥७॥

अतिबलिनामपि मलिनाशयेन बलिकर्णपुत्राणाम् ।
विश्वासोपनतानां वासो-पुत्रेण जीवितं जह्रे ॥८॥

अपरीक्षितपरवञ्चनमञ्चति लोभादपेक्षितप्रेक्षी ।
व्याधूतपक्षमवशो विहन्यते पक्षिवत्क्षितिपः ॥९॥

क्रूरचरितेन सङ्गतमसङ्गतं सत्स्वभावस्य ।
जीवति पटीरविटपी परिरभ्य न दावपावकं प्रायः ॥१०॥

---

२. अननु (प), ति (का). ४.प misses these three lines पद्यत्रयं पपुस्तके नास्ति. ५. त्येव (का), ध्यामलनं (मा रा). ७. नरपतिरस्य (प), यो (का), तो (प), पी (मा रा का दी) ८. विश्वम्भराद्दीनाम् (का). ९. वे (का). १०. का has no दाव.

निहतं गीतेन मृगं मीनं बलिशेन तेजसा शलभम् ।
दृष्ट्वापि यदि न पश्यति नश्यति किं केन करणीयम् ॥११॥

कामं कुमीनसदृशं राज्यमपि प्राज्यकण्टकं कुशलः ।
पाकान्वितमतिसुरसं भुङ्क्ते बहुधाऽवधानेन ॥१२॥

अतिबलवति मतिशाली सदृशनृपाली-नमस्कृते नृपतौ ।
दानविधिं विदधानो गताभिमानोऽतिवाहयेत्समयम् ॥१३॥

अर्थेन रक्षितमिदं राज्यं पुनरर्थमर्प्पयति ।
अर्थैकपरो नृपतिः परिहरति पुनः क्षणादुभयम् ॥१४॥

अप्यतिशयितमनर्थं शमयत्यर्थं समर्प्पयन्नृपतिः ।
तमनर्प्पयन्निरर्थं प्राणेन समं परित्यजत्यर्थम् ॥१५॥

उत्तारयति विपत्ताविति धनवत्तामवेक्षते क्षितिपः ।
चेन्नेह तदुपयोगस्तं नियतं वित्तसञ्चयो रोगः ॥१६॥

रविरिव सुचिरेण रसं भृशं नृपो धनमुपादत्ते ।
काले वर्षति हर्षान्निःस्पृहमुच्चेऽपि नीचेऽपि ॥१७॥

दानं राज्यनिदानं प्रबले स्वबले च दुर्बले नृपतेः ।
फलमत्र कालहरणं सहप्रहरणञ्च पापसञ्चरणम् ॥१८॥

वृतिभिरनिवृत्तमुखा यस्य नृपस्योपजीविनः पुरुषाः ।
स हि समिति विजयमयते शेते सङ्ख्या वा सहस्रेण ॥१९॥

यद् भुक्तमभून्नृपतेराकोटिघटावधि भटानाम् ।
यावद्गुणं तदर्प्पणमिदं विदन्त्याजिपिशितभुजः ॥२०॥

---

११. ड्डि (का), तदापि (प). १२. ण्ठ (मा रा)?. १३. सदृशि (का), मा (प).
१५. स (का प) ये (मा रा ) corrected as य, द (का). १६. व (का),
म (का), प (का), ह्यस्मि (का प). १७. नि (मा) निः (वी). १८. पि (च),
संह (का). १९. मु (का). २०. र (वी), न्नुरण (प), च (का).

विजितो रिपुरपखेदं भेदं चेत्तस्य साधयेन्नृपतिः ।
सुहृदा योऽजनि भिन्नः किं न हितन्तस्य वेधसा विहतम् ॥२१॥

एकारिमित्रयोश्चेत् परस्परं भूपयोर्भेदः ।
तदरिः परिगतनीतिः सुखमभियोगं करोतु गतभीतिः ॥२२॥

शत्रोः पराभियोगश्चेदजनि निरौषधं गतो रोगः ।
परपरिभूतस्य यतः कुतोऽन्यतः पौरुषप्रसरः ॥२३॥

श्रितसागरपरिखाङ्कामवाप्य लङ्कामपि दशास्यः ।
भेदेन समरपृष्ठे शयितो दयितोऽपि गिरिसुताभर्तुः ॥२४॥

अभिलषतोरनुभावान् तिलोत्तमायाः किलोत्तमानुभयोः ।
सुन्दोपसुन्दयोरपि नाशो भेदादुदाहृयते ॥२५॥

मित्रै धनैरथ जनैर्नयेन विनयेन भेदिते नृपतेः ।
कुत्राहिभयव्याकुलहृदो बहिर्भावसम्भवो भवति ॥२६॥

भेदो भवति निहन्ता क्षुद्रेणापि स्वकेन लोकस्य ।
अन्तःशरीरजन्मा स्फोटोऽपि स्फुटतरं विनाशयति ॥२७॥

निजबलपौरुषबाध्यं यदि वोपायान्तरासाध्यम् ।
नृपतिर्विज्ञाय रिपुं चण्डकृतिर्दण्डमाधत्ते ॥२८॥

शक्ति प्रभावमन्त्रोत्साहकृतां प्राह पण्डितो नृपतेः ।
सम्पन्नः सुखमनयाऽपनयाय परस्य विग्रहं कुरुते ॥२९॥

चिरपरितोषितवाहः स्ववृत्तिसोत्साहसुभटसन्नाहः ।
नीरन्ध्रगुप्तमूलः प्रयाति राजा रिपोरननुकूलः ॥३०॥

---

२१. न (वी), किन्निहतं (प) किं न हितं तुष्य (का) हि (का प).
२२. भेदयोः (प). २३. त (प), वः (मा). २४. श्री (प) षा (मा रा प वी), का is obscure. .तवेन . २५. रनुरागान् (प) त् (का), ह्नि (का).
२६. र्नैः (प), तो (प). २८. रैः (प). २९. क्तिः (का), च (मा रा).
३०. पु (मा रा वी) सुवृत्तिसेनः (प).

देवद्विजगुरुभक्तश्चिरपरितुष्टैर्भटैर्युक्तः ।
बहुधा विमृष्यकारी नारीणां वशमुपैति नरपालः ॥३१॥

अबलोऽसि न जितकाशी प्रतिभटराशीन् परापत क्षितिप ।
जाताम्भःकणपातः क्व विनश्यत्यनलसंघातः ॥३२॥

शूरोऽसि दूरपातिभिरात्मसमैः सद्भटैरपि समेतः ।
युद्ध्यस्व बद्धसाहसमधिकैरपि धीरवीरबलैः ॥३३॥

विजयेन राज्यभोगः सङ्गरमरणेऽप्सरोभिरभियोगः ।
मा विरम वीर ! युद्धादुभयविरुद्धा यशोर्य्यशोहानिः ॥३४॥

युद्ध्यस्व बद्धमानं दानं सानन्दमाचर धनानाम् ।
मा तात कातरत्वं राज्याय भज क्षणक्षयिणे ॥३५॥

निर्भरमुपार्ज्जय यशो न वशो भूयाः कृपणतायाः ।
आकर्ण्य नरपतीनां पुण्यरतीनां पुराचरितम् ॥३६॥

क्षुद्रेऽपि क्षोणिभुजा न जातु वैरिण्युपेक्षया स्थेयम् ।
स्वयमनिहतः समुद्रे क्षिप्तोऽपि जघान शम्बरं बालः ॥३७॥

कपटादपि रिपुहननं कुर्य्यादिति नीतिरौशनसी ।
हननमृते च गुरुमते बन्धादि विधीयते रिपोः कपटैः ॥३८॥

धीरः सत्कुलजन्मा सन्मार्गरतः कृतज्ञसेवी च ।
स्फुरितमतिर्न्नृपतिहितः सुकृतैरुपयात्यमात्यपदम् ॥३९॥

नृपहितविनिहितहृदये सुकृतिनि सचिवे निवेशितात्मभरम् ।
यद्राज्यं तेन सुखी भवति परायत्तसिद्धिरवनीशः ॥४०॥

स्वस्मिन्नेव समस्तो येन न्यस्तो भरः क्षितीशेन ।
स्वायत्तसिद्धिरेषः स्वकरधृते मन्दिरे वसति ॥४१॥

---

३१. क्तः (मा रा), क्ति (का), नाम्ब (मा रा), ३२. पः (प). ३५. ज्यं (दी), ने (दी). ३६. म् (का दी), ता (प). ३७. जां (का), क्षमा (मा दी). ३८. द्धा (मा). ३९. महितः (प). ४०. यं (मा रा) रः (दी).

दुःखं परवशमखिलं स्ववशं सुखमित्युवाहृतं मुनिभिः ।
तदनवहिते सहाये यद्वाप्यहितेऽवगन्तव्यम् ॥४२॥

राज्यं हि सचिवनृपयोरत्युच्छ्रितयोर्य्यदायत्तम् ।
तद्वै राज्यं तत्फलमलम्भि शकटारनन्दाभ्याम् ॥४३॥

नृपसचिवयोर्द्वयोरपि सरूपयोश्चेद्विभक्तिरविशिष्टा ।
द्वन्द्वापवादहेतुर्न्नियतं स्यादेकशेषविधिः ॥४४॥

पौराः परिणतनीतेः फलेन जानन्ति मन्त्रितं नृपतेः ।
इदमन्यैरुन्नीतं विपरीतं फलति निर्णीतम् ॥४५॥

हृदयं नृपतेर्म्मन्त्रो मर्म्माणि भवन्ति मन्त्रिणस्तस्य ।
तेषामपि यदि भेदो विच्छेदो जीवितस्यैव ॥४६॥

निजहृदयं सत्प्रणिधिः शास्त्रं चक्षुस्त्रयं नृपतेः ।
यैः पश्यत्यतिसूक्ष्मं व्यवहितमतिदूरवर्त्ति वा वस्तु ॥४७॥

पर्य्यालोचयति न यः कार्य्याणि कृतान्यपि प्रकृतिमुख्यैः ।
स्वयमनवेक्षितकर्म्मा कृषिपतिरिव हीयते स नृपः ॥४८॥

हिमकरसमस्समक्षे परःपरोक्षे सखा वृषार्क्कस्य ।
जलधिरिव दुरवगाहस्तमाह नरपालमाङ्गिरसः ॥४९॥

अन्धोऽप्यन्योक्तपथो दण्डधृगन्योपचरणीयः ।
राजत्वमप्रतिहतैर्ज्जनानुरागैर्भजति भूपः ॥५०॥

उच्चैर्य्यद्यस्ति मनः किं विपदा सम्पदा गन्त्री ।
पुरुषस्य मनसि भग्ने मग्नेवापत्सु लक्ष्यते लक्ष्मीः ॥५१॥

---

४२. प omits इति, न (प). ४४. व (का च). ४५. नं (प). ४७. ण (का), शू (मा रा), पि (का), बी omits वा; मा and रा leave this blank. ४९. रं (का), ष्प (मा रा बी). ५१. ग्नैरा (का).

लघुरत्युच्चैश्चरितः क्रमेणं गन्तासि गौरवं तात ।
कलया कलया काले कलानिधिः पूर्णतामेति ॥५२॥

भज लघुमपि भजमानं मानं मा वर्द्धयावलिप्तस्य ।
यदि सर्वत्र समत्वं श्रियो ममत्वं विमुञ्च योगीव ॥५३॥

कृतमथ मधुरतरैरपि भूमिभृति व्याहृतैर्ब्बहुभिः ।
प्रतिजानामि समृद्धि साहसयुक्ते च नित्यमुद्युक्ते ॥५४॥

इयमत्र कयापि दिशा नीतिदृशा दर्शिता पदवी ।
चाणक्याद्यभिधानाज्ज्ञेयनिधानादथान्यदुन्नेयम् ॥५५॥

इति श्री हरिहरसुभाषिते राजनीतिप्रकरणम् ॥७॥

---

५२. म (रा). ५३. योऽस्त (का). ५४. हृ (का), मृ (का). मा and रा omit स, मु (का).

## समयवर्णनप्रकरणम् ॥८॥

प्रस्तावे समयादेर्व्वर्णनमाकर्णयन्नृपतिः ।
प्रायः प्रसीदतीति प्रसादयेदेनमेतेन ॥१॥

कान्ते स्नेहनिधौ समीयुषि मधौ जित्वा श्रियं शैशिरीं
विश्लेषाद्विव तस्य पाण्डिमभृतामालीलतानामियम् ।
कर्त्तुं नूतनचित्रपत्ररचमां किं काननश्रीरिमां
प्राचीनां पवनाञ्चलेन परितः पत्रावलीं लुम्पति ॥२॥

दरोन्मोलन्मल्ली मुकुल-कुहराभ्यन्तरगतं
दुरास्वाद्यं सद्यो दलमविकलीकृत्य सकलम् ।
समीपे सविश्य क्षणमथ परिक्रम्य परितो
न पातुं हातुं वा प्रभवति मरन्दं मधुकरः ॥३॥

अन्योन्यस्य नियन्त्रणापरिभवादप्रौढशीतातपाः ।
पुष्प्यत्किंशुकचूतनूतनदलाविर्भूतशोणश्रियः ।
पद्मोल्लासितगन्धवासितवहद्वातावदातत्विषो
मोदोन्मादजुषो हरन्ति हृदयं वासन्तिका वासराः ॥४॥

प्रसूनपटलारुणोन्नतपलाशजालच्छला-
न्मनांसि मदनो बलाद्दहति मानिनीनाम्मुहुः ।
न चित्रमिदमुद्गता यदिह भृङ्गधूमावली
वियोगिनयनाञ्चलीर्न्नयति खेदमस्राम्बुभिः ॥५॥

सन्ततागतवसन्तमारुत-प्रोल्लसल्ललितपल्लवोर्मिभिः ।
प्लाविता वनलताभिलाषिणः शाखिनः किमनुरागसागरैः ॥६॥

---

२. शर्वी (का प), द्वितरस्य (का), पत्रचित्र (प). ३. र (का प ), त्र (का).
४. पात् (का), छप (प), छ्या (का), शा (का), द्वि (का). ५. क्षका (का), ञ्ज (प).
६. सि (वां), नः (मा रा डी), षि (मा रा).

कार्णाटी-केलिवाटी-विटपि-नवदलान्दोलनाश्चोलबाला-
चञ्चच्चाम्पेयमालानिविलपरिमलाकर्षणोत्कर्षभाजः ।
वाता दातार एते मलयजमधुरामोदपूरैः प्रमोदान्
गोदावीचीविनोदार्जितजड़िमगुणानुद्वहन्तो वहन्ति ॥७॥

व्याधूतचूतनूतनसौरभघनमञ्जरी-परीरब्धाः ।
वाताः स्मरानुयाता वसन्ति वासन्तिकासु लतिकासु ॥८॥

सम्भुक्तसुरभिमीनो रविरुच्चैरश्विनीमुपारूढः ।
स्फीताम्बरस्सहेलं खेलति मेषेण राजेव ॥९॥

हित्वा हित्वा विधुरमनसो वीतकालानुसाला--
नन्तः पुष्पामपि मधुलिहः पाटलाम्पालयन्ति ।
तत्तन्वीनां स्तनगिरिशिरो नूनमारोढुकामो
जातःस्वीयोत्सवसहृदयं वीक्षितुं स्वेदविन्दुः ॥१०॥

पाटलापरिमलापहारिणः कुञ्जकोषझरगूढचारिणः ।
तस्करानिव तपर्त्तुवासरे प्राप्नुवन्ति न जनास्समीरणान् ॥११॥

रविकिरणानुगृहीता ग्रीष्मेष्वणवोऽपि रेणवो धरणेः ।
चरणं दहन्ति सुचिरोपमर्द्दनं कः क्षमो भवन् क्षमते ॥१२॥

माद्यच्चण्डमरीचिमण्डलचलत्तेजोनलत्रासतो
दूरोन्मुक्तवियत्पथं विरचयन् वातं बलान्निःकथम् ।
कुर्वंस्तोयमहो महोष्णकलुषं भूयास्त्रिषन्त्राधयन्
प्रस्वेदेषु वपूंषि निःश्वथयति ग्रीष्मोयमूष्मोल्वणः ॥१३॥

उपभुक्ताशेषवृषं धावन्तं मृगशिरोंशभोगाय ।
कः खेचरकेसरिणं पश्यतु भास्वन्तमन्तकप्रतिमम् ॥१४॥

---

७. लो (प). ८. ल (का). ता (रा). ९. चरः (का), षेन (प) खेण (का) खेन (मा रा बी). १०. म (का प ), शि (का), वो (का), हृ (प), तं (प). १२. प omits भवन, सहते (बी). १३. त्रा (का), चर(का), वंस्ता(का). कबु(का), कु (का). १४. मा रा बी and प have राशि before भोगाय.

स्वपिति ग्रीष्मभयादासायं सुश्लिष्टसवातच्छायम् ।
जन्तुर्य्यत्नशतान्यारभतां को नामान्यत्रैतल्लभताम् ॥१५॥

तापभीत इव तोयचरोऽभूद् ग्रैष्मिकेषु दिवसेषु मनोभूः ।
यज्जले विहरतामिह यूना-माविरस्ति रतिकेलिरनूना ॥१६॥

सारङ्गाः परमादरादगणितप्रौढातपाः पादपा-
नारुह्य स्फुटमाह्वयन्ति विरुतैरागामिनीं प्रावृषम् ।
औत्सुक्येन समीयुषां मधुलिहामन्तःस्पृहादन्तुरं
ब्रूते नीपवनीषु हर्षजननीं सम्भाविनीं सम्पदम् ॥१७॥

हृष्यन्तश्चिरदुर्गता इव घने दातर्युपर्युद्यते
दातुं वारिवसून्यसूनिव पुरः प्राप्तुं परिस्पर्धिनः ।
झञ्झावातविधूतपत्रमुखराः शाखाकरास्फालिनः
किं वर्षासु परस्परेण कलहायन्ते धरित्रीरुहः ॥१८॥

अस्याङ्के कषपट्टभासि-च्चपलाश्रीः स्वर्णरेखायते
धारासारघनं सुदर्शनमदश्चक्रं जगत्पश्यति ।
प्रोदञ्चद्वनमालमञ्जुलरुचा देहेन पीताम्बरं
दूरोन्नीतशिखण्डमण्डलमिदं रूपं हरेरम्बुदः ॥१९॥

एकत्वं न रसैः कयोस्समजनि स्त्रीपुंसयोः प्रावृषि
प्राप्तौ यद्रसनिर्भराविह धराकाशौ चिरादेकताम् ।
योषित्सङ्गमगूढसर्वतरुणः कालोयमालोक्यते
छन्नः क्वापि दिवा युवापि निशया क्रोडीकृतः क्रीडति ॥२०॥

मैथुनभोगोपरतः पयोदमलिनाम्बरावरणः ।
पामर इव रविरधुना प्रकटं वर्षासु कर्कटं भुङ्क्ते ॥२१॥

---

१५ व (मा रा), न्तू (मा). १६. न्ति (का). १७. नी (रा). मन्त(वी), न्त(का), वि (का). १८. प्तं (का), त्र (का). १९. भा (मा राप), ञ्जुल (पु), ण्ड (वी), न (वी) वम् (वी).

म्लानान्नीपतरोरपीपतदिमान् सन्धिः शरत्प्रावृषो-
रन्तःकोरकितामहो मधुलिहो जातीमवातीतरत् ।
पुंहंसान्समचीकरत् कृतधियो भाष्येषु वागुद्यमं
किं केका-निगदन्त्वजीगमदतिक्लैव्यं कलापिव्रजान् ॥२२॥

सिंहादवाप्य कन्यां सैंहीमयमाश्रितो वृत्तिम् ।
विकिरति कैरवमुक्ता घनकरटिघटाविदारणो भानुः ॥२३॥

शुभ्रैरभ्रकुलैः सितं समकृताकाशं सरः कैरवै-
र्ज्जातीभिर्व्विपिनश्रियो विकसितैः काशैरियं काश्यपी ।
चञ्चच्चन्द्रमरीचिवीचिभिरिमाः किञ्च क्षपास्तत्किमु
क्षुब्धक्षीरसमुद्रमुद्रितहरित्क्रोडे शरत्क्रीडति ॥२४॥

उत्सृज्याम्बुधिजामुखाम्बुजसुखालोकव्रतं यश्चिरा-
द्देवः सेवितवान् सरोजनयनो निद्रां समुद्राम्भसि ।
सोऽप्युत्तुङ्गभुजङ्गभोगशयनाज्जागर्ति यस्योत्सवे
सोऽयं शारदशीतरोचिषि चमत्कारः कथं कथ्यताम् ॥२५॥

अलोद्गतैरुज्जघनोत्कटातटै-
र्विकाशिकाशैस्सितकेशपेशला ।
परं स्फुरन्नर्त्तयतीव खञ्जनं
शरज्जरद्वारवधूरिवेक्षणम् ॥२६॥

शरदमपसरन्तीं युक्तमेषा सरःश्री-
रनुसरति विनोदान् कौमुदानाददाना ।
उपसरति कराले हन्त हेमन्तकाले
भवति किमिति शालिक्षेत्रपालिप्रमोदः ॥२७॥

---

२२. साः (वी), मे (मा रा प वी). २४. हः(का), मा (मा रा वी), मां (प). २५. मत्स्यो (ब): २६. जा (का), शिश (का), पुर (का). २७. न्ती (वी), र (मा रा प वी), निप(ब).

नीचस्त्वमसि तुलायामयमुच्चैः कार्त्तिको शशाङ्क इति ।
शरदङ्काशविकासादुपहसितवतीं मुमोच मलिनोऽर्क्कः ॥२८॥

शीतैरुवीतैर्न्निकृतं निसर्गान्मार्गादपि भ्रंशितमंशुमन्तम् ।
दृष्ट्वा सरो वा वत वासरो वा दैन्ये यदन्वेति न चित्रमेतत् ॥२९॥

नीहारतूलभृतमम्बरमेतदुच्चैरासाद्य नाद्य मिहिरो बहिरभ्युपैति ।
दीने दिने द्रुतमनेन विनेह शोच्यो नोच्येत केन तरुणस्तिमिरावरोधः ।३०।

स्पृष्टं वारि व्यथयति मुहुर्वह्निदाहाविशिष्टं
कम्पः कष्टं नटयति वपुर्व्वादयन् दन्तवाद्यम् ।
तूलस्थूलावरणविकलं हन्त हेमन्तजाता
वाताः सूचीनिचयखचितप्रायतां प्रापयन्ति ॥३१॥

वृश्चिकसन्दंशवशान्मलिनमुखो जातवेदन इवायम् ।
पौषभिषजोपनीतं वियन्मणिर्म्मूलमुपभुङ्क्ते ॥३२॥

निर्गतान्यकुसुमे हिमागमे सन्निषेव्य तिलसूनसम्पदम् ।
भाविकुन्दमकरन्दविन्दवे मन्दमन्दमलिवृन्दमञ्चति ॥३३॥

सोत्कम्पमस्मिञ्छिशिरे शरीरं सङ्कोचितं को न करोति जन्तुः ।
नीहारतूलप्रकरप्रवेशान्निशा परं व्यायतकायमास्ते ॥३४॥

अध्वन्यानां शिशिरसमये चण्डचाण्डालकाण्ड-
प्रायाः कायानहह पवना क्लेशयन्तो विशन्ति ।
बध्नन्त्येते सपदि सुदृशां दुर्भगानामपीह
प्रौढाश्लेषाश्लथितदयितं मूर्ध्नि सौभाग्यपट्टम् ॥३५॥

नन्दितवह्निरनिन्दितभानुः श्रितसोष्मस्त्रीस्तनगिरिसानुः ।
तूलस्थूलावरणास्तरणः शिशिरं शमयति सम्यक् तरुणः ॥३६॥

---

२८. दुपाहतरतिं (का). २९ वि (रा), र (का). ३०. मु (मा वी), ले (मा), च्ये (का प वी), मो (वी), णं (का). ३१. व (का), म्पं (प), स्तू (मा), शू (प), व (का). ३४. श (का), निशाकरो (प). ३५. न्ध (का). ३६. नि (मा रा प का दी), न (मा रा).

शिशिरेऽनुधावति रिपौ धनुरप्युन्मुच्य भानुरपयातः ।
मकरालयमपि तीर्णः किं भीरुः कुम्भमाविशति ।३७।

*** *** *** ***

आविष्कुर्व्वन्निव नवनवेनादरेणानुरागं
सर्वाङ्गीणं सुचिरविरहोन्मूर्च्छितायां नलिन्याम् ।
त्रैलोक्यान्धीकरणतिमिरद्वेषरोषारुणत्वं
व्याकुर्व्वन्वा किमयमुदयत्यम्बरे तिग्मरोचिः ॥३८॥

इदमनुदितहोतुः कोऽपि होमावसान-
ज्वलदनलमवादीत् कुण्डमाखण्डलस्य ।
मणिघटमभिषेके प्रातरस्योचुरेके
कलितकिरणतोयं मण्डलं चण्डभासः ॥३९॥

व्यधित विधुमधीनं बल्लभं वारुणीति
स्फुरदरुणितमास्यन्तिर्य्यगावर्ज्जयन्त्याः ।
सुरपतिहरितो यत्कुण्डलं व्यक्तमेकं
तदिदमुदितमूचुर्म्मण्डलञ्चण्डभासः ॥४०॥

प्रायः प्राचीप्रमदाभिहतः प्रागचलप्रासादोत्पतितः ।
उदयति रविरतिशोणिमशोलः कुङ्कुमकेसरकन्दुकलीलः ॥४१॥

सवितरि चिरवैरिण्युत्थिते निःपतन्तो
भयविरचितपक्षा गोलताप्राप्तवक्षाः ।
मधुकरनिकराणां कैतवादन्धकाराः
प्रियकुलमदसीयं किं सरः संश्रयन्ते ॥४२॥

---

३८. सा (रा), नं (मा रा दी), दुर्वान्ता (का). ३९. चि (का प). ४०. प misses this verse, त्तं (का), चि (का). ४१. प्र (मा रा) प corrects this foot as प्रागचलेशशिखरतःपतितः. ४२. चलि (का), स्त (का) र (का).

विरहेण रवेर्द्दिनावसाने परिपीतानि विषाणि वारिजि[illegible]ः ।
कमलोदरनिस्सरद्द्विरेफव्यपदेशादधुना किमुद्गिरन्ति ॥४३॥

त्वमन्यहरिदङ्गनाविहरणव्यपेतक्षपः
स्पृशन्नुपगतोऽत्रपः किमधुना करैर्म्मामिति ।
प्रसार्य्य कमलङ्करं भ्रमरभाङ्कृतिव्याजतः
समाचरति पद्मिनी किमु रवेरुपालम्भनम् ॥४४॥

माध्याह्निकैर्म्मिहिरवह्निकरालकीलैः
काष्ठोत्करादिव परिज्वलनः पतद्भिः ।
अङ्गारकैरिदमपूरि जगत् किमन्यत्
तेजोऽपि नायनमिहायनमुज्जहाति ॥ ४५ ॥

नीरावैर्व्विहगैस्तिरोहितगिरो निर्व्वातनिस्पन्दना
मध्याह्ने मिहिरातपेन तरवस्तप्ता इवोन्मूर्च्छिताः ।
शोकोन्मादभरेण पादपतितास्तेषान्तु जाया इव
च्छायाः सङ्कुचितोपतप्ततनवः क्रोशन्ति झिल्लीरवैः ॥४६॥

रविरयमभूत् प्रागारूढो नभश्शिखरं शनै-
र्झटिति पतति प्रत्यक्सिन्धौ परिस्खलितस्ततः ।
कथमपि चिरायासादासाद्यते पदमुच्चकै-
र्व्विधिरयमधःकर्त्तुं कञ्चित् पलं न विलम्बते ॥ ४७ ॥

विधिना विनिपातनाय नीतो रविरस्ताचलमम्बुधावगाधे ।
मुखमुद्रणमम्बुजैरुपेतं प्रणयं के विपदि प्रमाणयन्ति ॥ ४८ ॥

---

४३. ज (वी). ४४. रह (प), पक्षः (रा). म्न (का) रि (मा रा)
४५. म (का प), मा and रा miss म. ४६. हा (का). ४७. व (मा)
स्थितिः (का), चिर (का), कि (का).

चिरकरपरिमृष्टं भानुबिम्बं दिनान्ते
सकुतुकमिव शोणं कालकापालिकेन ।
चरमशिखरिकण्ठान्तस्थलीं नीयमानं
विशति भसितपिण्डं गैरिकैर्लिप्तमेतत् ॥ ४९ ॥

प्राची कलावत्युपयाति कान्ते
सायं सपत्नी स्मयते मदीया ।
इतीव शोणं सपदि प्रतीची
रुषाऽर्कबिम्बं वदनं पिधत्ते ॥ ५० ॥

सन्ध्यासङ्गपिशङ्गवारिदघटा चञ्चज्जटासङ्कटा-
दीषद्दर्शितचारुचन्द्रकलिका कान्तालिकान्तद्युति ।
क्वापि क्वापि वनालिनीलिमसमाश्लिष्टारुणाभाष्टदिग्-
द्वीपित्वक्पटिधूर्जटेर्न्न हि घटेतैतद्वियत् किं वपुः ॥ ५१ ॥

नक्षत्राली पद्मकुञ्जे मृणाली
चक्रेणाक्र्केणार्धभुक्ता विमुक्ता ।
यद्वा सन्ध्यारागसिन्दूरवीथी—
मुक्ता-शुक्तिः किं कलावत्कलेयम् ॥ ५२ ॥

चरमाचलव्यवहितस्य रवेः किरणावशेषमवरोद्धुमिव ।
कथमेकदेव सहसा परितस्तमसा समाववृतिरे हरितः ॥ ५३ ॥

यान्यासन् वासरश्रीविरचितमिहिरोदारदीपोपरिष्टात्—
ससृष्टार्वाक्कपालायितवितवियन्नीलता-कज्जलानि ।
भूमीभाण्डे हरिद्भिर्य्युवतिभिरभितः पात्यमानानि मन्ये
तान्येतान्येव सम्प्रत्यविरलतिमिरस्तोमभावं भजन्ति ॥ ५४ ॥

---

४९. कन्तान्तस्तगीं(रा) कण्ठान्तस्तगीं (मा), कन्थान्तस्थलीं (प), कन्थान्तस्थगी (वी). ५०. स्म (का) वर्षा (का). ५१. स (मा रा प ), ह्ला (का), द्वि (मा रा प वी), तिः (का), ५२. युक्ता (का). ५४. त्रि (का), वा (मा रा प का वी), वितनुरियंमीलता (का), यंनी (मा रा ). नीलिमा (प).

दत्तोष्णांशुकरावकाशमभितोऽप्याकाशमाशु ग्रस-
न्नद्वैतं महसामुपाहृतरसां क्ष्मामन्धकूपे क्षिपन् ।
मत्वैतान्यपि तैजसानि सहसा चक्षूंषि मुष्णन्नहो
द्रोहोन्मादमयस्तमिस्रनिचयस्त्रैलोक्यमाक्रामति ॥ ५५॥

अधिगगनमनेकास्तारका राज्यभाजः
प्रतिगृहमिह दीपा दर्शयन्ति प्रभुत्वम् ।
दिशि दिशि विलसन्तः सन्ति खद्योतपोताः
सवितरि परिभूते किन्न लोकैर्व्यलोकि ॥ ५६ ॥

समुदेति लम्बितालकचुम्बितमिव कैतवात्कलङ्कस्य ।
प्राचीललाटपाटलचन्दनसिन्दूरविन्दुरयमिन्दुः ॥५७॥

प्राच्याः किं वदनं दिनेशविरहाद् व्यक्ताञ्जनास्रं शशी
कान्दर्प्पः किमु दर्प्पणो दिनपरित्यागोन्मिषन्मालिमा ।
किं दैवामृतपाकपात्रमुदितान्तर्वाष्पमुज्जृम्भते
किं वा पञ्जरमभ्रकीयमुदरव्यक्तेन्द्रलीलामृगम् ॥५८॥

अस्तग्रस्तगभस्तिमत्करततिन्यङ्नीतचञ्चूपुटी
पाटीराद्रिमथो हिमाचलमधः प्रक्षिप्य पक्षद्वयम् ।
पश्चादुन्नतपुच्छपुञ्जमुदयत्प्राचीप्रकाशच्छला-
दण्डं मण्डलमैन्दवं जनयति व्यक्तं बकोटी-वियत् ॥५९॥

निशा सूते सूनुं सपदि सुरतानन्दमिति यत्
पुरः प्राची दूर्वाचितमकृत पिष्टातकभृतम् ।
तदेतन्नः पात्रं स्फुरति दरसिन्दूरवलितं
शशाङ्कोऽयं शोणद्युतिरिति मतिं कोऽपि कुरुते ॥६०॥

---

५५. ष्टां (का), वार (का), कु (प), व (रा प). ५६. का:कान्ति (प), ष (मा रा). ५८. क्या (मा), हृव्य (रा-प), दे (रा). ५९. न्याङ्नी (मा दी), न्यङ्ग्री (का), चां (का). ६०. ङ्क (का), मिं (का).

दुग्धाब्धेर्नवनीतमन्वहमयं निस्सार्य्य कालः क्रमात्
पिण्डं पूर्णतरं व्यधादधिवियद्भाण्डं विधोर्म्मण्डलम् ।
सान्निध्यन्तु यथा यथाम्बरमणेर्व्वह्नेरिदन्नीयते
तत्तापेन तथा तथा द्रवदशामासादितं क्षीयते ॥६१॥

किय्यूनां मृगनाभिलिप्तमुडुभिः कर्पूरपङ्काक्षरै—
र्व्योमाज्ञापनपत्रमत्रप-रतासक्त्यं स्मरः प्राहिणोत् ।
अन्तर्ल्लाञ्छनकल्पितागुरुमसी तन्नामवर्णाङ्किता
यत्रायं घनचन्दनद्रवमयी मुद्रा समुद्रात्मजः ॥६२॥

उद्धूयमानेन्दुकरैरुन्मज्जत्यन्धकारवारिनिधेः ।
क्वापि क्वापि विलग्नच्छायाजम्बालधोरणी धरणी ॥६३॥

अजनि रजनिरन्या चन्द्रमःकान्तिकन्या—
विपुलचपलवीचिव्याचिता काचिदेव ।
सतरुगिरिसरिद्भिः किं हरिद्भिः समेतं
धवलिमनि धरित्रीमण्डलं मग्नमेतत् ॥६४॥

इति श्री हरिहरसुभाषिते समयवर्णनप्रकरणम् ॥८॥

---

६१. ग Ms. begins here. ल (मा रा प दी), व (का दी), दा (का दी). ६२. क्षा (का), मत्र परता separate in (का), शान्त्यं (का), शात्यं (प), समी (मा रा प), षो (का). ६३. द्धि (का), धे (का), छा (मा रा), रि (प). ६४. रम्या (का दी). किं समेतं हरिद्भिः (प०).

## शृङ्गारवर्णनप्रकरणम् ॥ ६ ॥

शृङ्गारे धनभाजामाजानिक एव मानसो मोदः ।
तस्मान्नृपतिसभायां पठनीयानीदृशानि पद्यानि ॥१॥

सञ्चारं जड़िमा गिरं मधुरिमा गण्डस्थलं स्फोतिमा
वक्षोऽपि द्रढिमा त्रिकञ्च तनिमाऽप्याक्रान्तुमुत्कण्ठते ।
ताटङ्कं निभृतेन धारय जहौ बाल्यावनीभृत् तनूं
वक्तुं वैशसमेतदक्षि किमभूत् कर्णान्तिकं गन्तुकम् ॥२॥

काञ्ची काञ्चिदियञ्चकार जघनन्यस्ता गतेर्मन्दतां
गाढ़म्बद्धमिदञ्च कञ्चुकमदादुच्छूनतां वक्षसः ।
नेत्रप्रान्तमथाकुलङ्कलयति श्रोत्रावतंसद्वयं
तत्कोऽयं बत मत्प्रसाधनविधौ सख्यैषमस्त्वत्क्रमः ॥३॥

किं परारि न परापतन् घनाः किं परुन्नवमरुन्न केतकः ।
मोहरोहणतया भयावहो भाव एष विषमः किमैषम ॥४॥

सव्रीडस्मितमधुराधरान्तकान्ति-
र्य्यत्तिर्य्यङ्नयनतरङ्गितावतारः ।
जानीमः समजनि यौवनोपदिष्टे
मुग्धाया मनसि मनोभवाधिवासः ॥५॥

वैरुद्गमितोऽङ्कभून्न जलधेः किन्त्वास्यमस्या विधुः
संश्लिष्यैव यदेष मन्थनवशोन्मिश्राण्यमून्युद्गतः ।
कम्बुङ्कण्ठमयामृतं विहसितं शैवालजालं कचान्
मुक्ता एव रदान् प्रवालमधरं मीनावुदारे दृशौ ॥६॥

---

२. न्त (का मा ), ली (का). ३. ते (दी), द (प दी), ख (मा रा ), ४. वि (का), द् (दी), र (का), द (दी). ५. ष्टैः (का). ६. दंवै (मा रा दी) ङ्कः(का), धु(मा), ण्ठ (का ग प), न्य (मा रा का प ग दी) म्बूक (का), त् (का).

अजनि शिशिरशीलं शैवलं सागरे य-
च्चिकुरमकृत कामस्तन्वि ते किन्न तेन ।
वहति कुटिलमेनं हेतुना केन मूर्ध्ना
वदनविधुरयञ्चेत्सोदरोनादसीयः ॥७॥

उदयति तडिच्चित्रं मित्रं रतेः कमलद्वयी
कुसुमितनवस्तम्भे रम्भे विधाय तनोरधः ।
तडिति वलति व्योम व्योमाश्रयञ्च गिरिद्वयं
गिरिपरिसरे कम्बुः कम्बौ कलानिधिमण्डलम् ॥८॥

यमजकमलकुड्मलो स्तनौ ते तरुणि तनू-सरसो रसोर्मिभाजः ।
स्फुटमियमनयोस्तु नाभिनिम्नस्थिततनवनालति बालरोमराजिः॥ ९॥

विधौ वदनकैतवादिह तवातिदीप्तोदिते
स्तनाचलतलावपि स्फुटपलायमाना घना ।
कृशा भयवशादिवाविशति रोमराजो-मिषा-
दियं तिमिरधोरणी किमु गभीरनाभिह्रदम् ॥१०॥

उन्नयति नाभिनिम्नान्मुक्तावलिपाशि रोमराजिनलम् ।
स्मरशबरः स्तनभूधरनिपतत्तरुणाक्षिपक्षिबन्धाय ॥११॥

हृदाश्लेषोदारः परिमृशतु हारः स्तनतटं
नटत्वेतद्गण्डे कुवलयदृशः कुण्डलमपि ।
स्मितालम्बी संवाहयसि यदि बिम्बाधरदल
फलं वीटीराग त्वदुपरि न जागर्त्ति जनुषः ॥१२॥

चित्रं तरुणिमराज्ये समाश्रिता बलिभिरप्यबला ।
किमपरमुरोजशम्भुर्ज्जीवातुर्ज्जायते मनोजस्य ॥१३॥

---

७. र्धा (का), सा (का), वः (मा रा ). ८. लि (मा रा का प वी). ति (रा), लि (मा रा का प वी). ९. द्म (मा रा प वी). १०. विव (में), पा (का). ११. शरभः (का), शबर (मा रा प वी). १२. र (मा रा वी).

विसर्प्पत्कालिन्दीलहरिपरिपाटीपरिमृशा
दृशा दीर्घापाङ्गक्रमणरमणीयं वलितया ।
निरुन्मीलो नीलोत्पलदलकलापैर्न्न कतिधा
सुधास्निग्धासारस्नपित इव सद्यस्समभवम् ॥१४॥

प्रियेक्षितायाः प्रतिनेत्रपातस्त्रपाभरैर्द्दूरमपाकृतोऽस्याः ।
रोमाङ्कुरो रङ्कुविलोचनायाःकपोलयोःकेन निवारणीयः ॥१५॥

स्मितमधुरमेत्य निभृतं जनयति यूनोः परस्परप्रणयम् ।
दूती दृगेव चतुराऽपरा तु शङ्का-कलङ्काय ॥१६॥

अन्य इत्यनुपजातयन्त्रणं प्रागुदञ्चितवती विलोचनम् ।
मामवेत्य चकिता वृतानना दन्तदष्टरसना मनागभूत् ॥१७॥

प्रतिनवपुलकाली-मण्डिता गण्डपाली
निगदति विनिगूढानन्दहिन्दोलि चेतः ।
सुदति वदति पुण्यैः कस्य धन्यैर्मनोज-
प्रसरसमकृदेतच्चापलं लोचनस्य ॥१८॥

क्षौमेण स्तनतुङ्गमङ्गलघटावाच्छाद्य माद्यत्तरा
सद्यःप्राप्तचिरानवाप्तविषयं यद्गेयमुद्गायसि ।
तत्प्रायः परिणीय कामपि रतिं प्राग्जन्मपुण्यार्ज्जिता-
मद्यालम्भि कुतोऽपि तन्वि कुतुकागारे स्मरेणोत्सवः ॥१९॥

नैशं किमाचरति वासर एव कृत्यं
नृत्यन्निवैष करभोरु करस्त्वदीयः ।
स्मेरं सरोजमुखि वञ्जुलकुञ्जमाली-
मालोमिव त्वमनुपश्यसि कस्य हेतोः ॥२०॥

---

१४. लि (का). १५ व (वो)?. १७. या (मा रा का ग. हो), भा (प). १८. हि (प), लि (प). १९. न (मा रा प वो). २०. हृयं (मा. का) वो corrects हृयं as कृत्यं. लि (का).

तव तन्वि तरुणपुण्यादम्बरमणिमकरसङ्क्रमो जातः ।
अधिवेणि भवति नियमः फलमविलम्बेन भावि कामस्य ॥२१॥

कालीयैः कुचकाञ्चनाचलचमत्कारः किमुत्सार्य्यते
कीदृक् कुङ्कमकेसरत्विषि मुखे कस्तूरिकालेपनम् ।
स्फीतेऽस्मिन् जघने सरोज-वदने किं नीलचोलार्प्पणं
कस्मै साहसिनि त्वमिच्छसि विधेर्व्विन्यासमन्यादृशम् ॥२२॥

असितवसनस्रग्संवीता घनागुरुसारवन्-
मृगमदमषीस्नाता जाता त्वमेव तमस्विनी ।
अभिसर सुखं दन्तोद्योतं न तन्वि विकासयेः
श्वसितमथवा मुञ्चेश्चञ्चद्द्विरेफघनोद्गमम् ॥२३॥

निशि किमु शशिज्योत्स्नापायं त्रपालुरपेक्षसे
क्षपय न पटं शुभ्रं शुभ्राः स्रजोऽपि किमुज्झसि ।
अभिसर शरज्ज्योत्स्नी-भेदाग्रहाद् वदनं विधु-
र्व्विहसितलवोद्गारास्तारास्तनुस्तव कौमुदी ॥२४॥

भ्रातः कङ्कण किं कदाऽप्यसि घनाश्लेषेषु विश्लेषितो
मातः किङ्किणि किं कृता क्वचिदपि त्वं सौरते दूरतः ।
किम्मञ्जीर बहिः कृतोऽप्यसि रहस्ताताङ्घ्रिपङ्केरुहात्
सङ्केताध्वनि बद्धवैरमिव यन्मौखर्य्यमभ्यस्यथ ॥२५॥

सविलम्बे वनमालिन्यविलोकनविक्लवस्य नयनस्य ।
अयि केलिगेहदेहलि ! केवलमवलम्बनं त्वमसि ॥२६॥

---

२१. लि (का). २२. ह (का), मा (रा). २३. श्लोकद्वयं का ग पुस्तकयोर्न्न स्तः का and ग miss these two verses. मो (मा रा ). ञ्चु (मा रा वी), २५. तं (मा रा का), ह्व (प), ष (मा रा वी). २६. व (वी). पि (का). का misses ल.

केलीसद्मनि पद्मसुन्दरमुखी मन्दाक्षमन्देक्षितं
सम्प्राप्तेति समीक्ष्य निर्भरतराविर्भूतचेतोभुवा ।
प्रत्युद्गम्य जवादवारितघनाश्लेषालसा प्रेयसा
पर्य्यङ्कोपरि कार्य्यते सुकृतिना पादार्प्पणानुग्रहम् ॥२७॥

लज्जां संवलितामुपेयुषि मयि व्याधूय कम्पच्छलात्
सद्यः स्वेदमिषाद् व्यधायि सुदृशा धैर्याय वार्य्यञ्जलिः ।
भूयो माऽस्तु वियोगवैशसमिति प्रत्यङ्गमालिङ्गने
मद्गात्रप्रथनोचिता विरचिता रोमाङ्कुरश्रेणयः ॥२८॥

तन्व्यास्तल्पमुपेयुषि प्रियतमे सव्रीडया निर्गतं
सख्येति त्रपयाऽपि केलिभवनादेवापयातं बहिः ।
गाढाश्लेषनिपीडनान्निपतितामालोक्य हारावलीं
स्थातुं हन्त भिया क्षणं निविडया नीव्याऽपि न व्यापृतम् ॥२९॥

विश्लेषज्वरवेदनासहनयोः कारुण्य-कीर्णात्मना
क्वापि प्रापितयोः समागमसुखं यूनोर्म्मनोजन्मना ।
नैरन्तर्यनिवेशितात्मविशिखव्याजेन सूचीचयैः
संस्यूते वपुषी परस्परगुणैरेकात्मतामापतुः ॥३०॥*

अविरतविरुतकपोतीमर्प्पितरसमावृणोति घनवलनः ।
नवलतिकामतिकातरतरलितमदिरद्वयीं मुदिरः ॥३१॥

पयोवाहारूढा नटति कदलीकाण्डयुगली
तडित्तत्र न्यञ्चत्तटिनि घटयुग्मं नटयति ।
नमत्यम्भोजन्मन्यमृतमकरन्दौ विनिमयन्
महच्चित्रं चञ्चत्तिमिरपरिवेषो हिमकरः ॥३२॥

---

२७. भ (मा वी), सात् (का प ग). २८. म (का), मा is obscure, प्र (का वी). २९. न्व्या त (का), ल (मा रा का वी). ३०. वि(का ग), क्वा (प वी) *प ends here. ३१. मु (का), ३२. य (का), न (ग), ति (रा).

पर्याप्ते सुरते विकीर्णचिकुरोद्गीर्णे प्रसूने पुरः
प्रक्षिप्ते कुचकञ्चुके क्वचिदपव्यस्ते च हारे हृदः ।
नैतम्बे रसना-गुणे निपतिते भग्ने च दोष्कङ्कणे
प्रत्येकं निपतन्ति पङ्कजदृशो दैन्यस्पृशो दृष्टयः ॥३३॥

नीरागेऽधरपल्लवे कृतवती ताम्बूलरागार्प्पणं
प्राप्ते निर्गुणताञ्चकार चिकुरे निर्बन्धतो बन्धनम् ।
निर्वेदात् सुरतावसानसुलभान्निर्गन्तुकामं हृदः
कन्दर्प्पं कृपणाऽरुणद्धि निविडन्यस्ताञ्चलव्याजतः ॥३४॥

नीव्यां संयमनं कचे नियमनं श्रोणीतले चासनं
निश्वासाभ्यसनं मुखे समभवत्प्रत्याहृतिर्भूषणे ।
ध्यानं प्रेमणि धारणा स्तनतटे तन्व्याः समाधिः प्रिये
निर्वेदादिव किं रतान्तसुलभात्सर्वाङ्गयोगोत्सवः ॥३५॥

तन्वी स्मारानलाङ्गारान् निर्वाणप्रायतां गतान् ।
प्रदीपयति किं कान्ते रतिश्रान्तेऽञ्चलानिलैः ॥३६॥

स्मरसमरपरिश्रमप्रसुप्तं मिथुनमुपेतदयः प्रतिप्रतीकम् ।
परिमृशति निशावसानवातः प्रकटितमन्मथपक्षपक्षपातः ॥३७॥

जालान्तरालमालोक्य बालारुणकरारुणम् ।
शयितं दयितं प्रातः कातराक्षी निरीक्षते ॥३८॥

पर्यङ्कात्सहसाऽवतीर्य विहिता नीवी-नवीनस्थितिः
संरुद्धा कबरी कथञ्चन कुचाभोगोऽञ्चलेनावृतः ।
द्वारस्तम्भतले निलीय निभृतं प्रातस्त्रपाकातरं
दूरादुन्नमिताननार्द्धमसकृत्तन्व्या बहिर्वीक्ष्यते ॥३९॥

---

३३. अस्ते लूनगुणे नितम्बवसने (का ग). ३४. ल (मा रा का). ३५. ध्या (मा रा वी), नि (मा रा वी). ३६. त (मा रा वी), ते (का). ३७. म (का). ३८. ल (मा रा). ३९. यः (का).

बलाद्विलासभवनान्नीयमानेव लज्जया ।
धन्यं धीरा परावृत्य प्रातः कातरमीक्षते ॥४०॥

अङ्गाकृष्टिर्व्यथयति नखाङ्केषु वक्षोजकुम्भा-
वास्यं जृम्भा दशनवसने दन्तदष्टन्दुनोति ।
यान्त्याः खेदं व्रजति करजश्रेणिषु श्रोणिभागः
प्रातर्याति प्रगुणतरतां वैशसं नैशमस्याः ॥४१॥

भ्रमान्नामान्यस्या मयि निगदतीन्दीवरदृशः
पतन्मन्यौ नव्ये नयनमपसव्येन वलितम् ।
प्रणीयास्रं धौताञ्जनमहह बन्धूचितमदाद्
विपन्नाय प्रेम्णे सपदि तिलतोयाञ्जलिमिव ॥४२॥

धन्याऽहमस्मि यदि नाथ मयाऽपि नाम
तस्या निकामसुभगं सुकृतैरलम्भि ।
कुर्यामनीदृगभिधा विधुरा कथं ते
शान्ति मनागपरथा विरहव्यथायाः ॥४३॥

प्रतिरुद्धेव प्रेम्णा कुपितेन बहिर्व्विकृष्यमाणेव ।
अधिकेलिगेहदेहलि बाला दोलायते कृतिनः ॥४४॥

कुतस्ते देहलीस्तम्भ ! सम्भवस्तपसामयम् ।
कोपना मामनादृत्य यत्त्वां बालाऽवलम्बते ॥४५॥

मानं मानिनि मा विमुञ्च विदुषि ब्रूयाः क एष क्रमो-
यद्रागः श्रुतिगामिनोर्न्नयनयोरेतादृशो दृश्यते ।
किं चान्यत्कुचशम्भुसेविनि चिरं बन्धः कथं कञ्चुके
काञ्ची-संस्थितिभूषिताऽपि लभते नीवी न मुक्ति कुतः ॥४६॥

---

४०. का पुस्तकेनास्ति का-misses this verse. ४१. ङ्ग (का), ग-is obscure, नं (का). ४२. श्रय (का ग), पि (मा रा), म्ने (मा ग वी). ४३. स (मा रा वी), तिवारिधुरा (का), श्रा (मा रा). ४४. म्ना (मा रा वी), ने (मा रा वी). ४६, सेवनपरे (का), सन्निहितस्थितापि (ग) सन्निधिसंगतापि (का).

प्रतिषिद्धनखेन्दुसङ्गयोश्चिरमुत्सारितहारगङ्गयोः ।
किमुदेति न शम्भुशोभयोः स्तनयोरप्यनयोरनुग्रहः ॥४७॥

तव गुरुतरापराधादपि राधा गोप कोपना कुत्र ।
नितरामितरासु परं गणिता वनितासु वहति परितापम् ॥४८॥

निखिलं गोकुलभूषण दूषणमतिनिर्भरानुरागस्य ।
त्वयि सरुषं यत् परुषं पल्लवयति बल्लवी वचनम् ॥४९॥

कान्ते यामि क्व देशान्तरमपि शयनान्नेति किं सद्मनोऽपि
क्वैतावन्मात्रमाः किं कथयसि नगरान्न प्रिये निर्वृतोऽपि ।
इत्याकर्ण्योक्तवस्तुक्रमघनघनहृद्वेदना वेद नाहं
काऽहं कुत्रास्मि कोऽयं बत हतसमयोप्यस्मि वा नास्मि वेति ॥५०॥

इति श्री हरिहरसुभाषिते शृङ्गारवर्णनप्रकरणम् ॥९॥

---

४७. From here six leaves of ms. रा are missing—Nos. 39 to 44. स (का दी). ४८, वा (का). ४९. का misses these letters. ५०. only मा and दी have this verse. नी (मा).

## नायकनायिकाप्रभेदप्रकरणम् ॥१०॥

नायकनायिकयोरपि भेदा वर्ण्याः पुरो नृपतेः ।
तत्तदुदाहरणेभ्यो लक्षणमवसेयमेतेषाम् ॥१॥

पतिरुपपतिश्च वैशिक इति त्रयो नायकाः कथिताः ।
एतेषां कथ्यन्ते क्रमादुदाहरणपद्यानि ॥२॥

दातुं जातु पदाङ्गुलीमपि बहिस्तल्पादकल्पाऽर्णवे
तल्पे स्थापयितुं भुजङ्गरचिते नैवोचितेयं प्रिया ।
इत्यालोच्य निरस्तकौस्तुभमधः प्रक्षिप्य हारं हरि-
र्लक्ष्मीं वक्षसि कामकातरतया सन्धारयन् पातु वः ॥३॥

किं दुर्जनान्नहि बिभेषि यदेषि पार्श्वं
मा मेति भीतिपरुषं परिवर्ज्जयन्त्याः ।
सन्त्यक्तसाध्वसभरं परिरभ्य दोर्भ्यां
बिम्बाधरं धयति धन्यतमः प्रियायाः ॥४॥

नीता भवेद् क्वचन केनचिदेव यूना
किं गेह एव रमते तरुणान्तरेण ।
इत्याकुलं द्रविणपाणिरुपेत्य कामी
द्वारान्तिकञ्चकितमञ्चति वारवध्वाः ॥५॥

एतेषामनुकूलो दक्षिणधृष्टौ शठश्चेति ।
भेदचतुष्टयमेषां वदाम्युदाहरणमेकैकम् ॥६॥

नेष्यामि हा कथमरण्यदरीषु सीतां
तामन्तरा क्व पुनरक्षिपुटं क्षिपामि ।
इत्थं वधूं विपिनसार्थचरीं विधातुं
गेहे निधातुमपि रोदिति रामभद्रः ॥७॥

---

३. प्त (मा वी). ५. ध्वा (का). ७ रक्ष्यपि निः (मा वी). व (मा), चन्द्रः (का).

मान्या कुण्डिनभूरभूदसुभगा कुत्राथ सात्राजिती
वैषम्यस्य कथाऽपि मे धरणिभृत्कन्यासु नान्यास्वपि ।
इत्थं दित्सति पारिजातकुसुमं सन्देहदोलायिते
भूयः पश्यति नारदस्य वदनं देवे भवेन्मे रतिः ॥८॥

नीत्वाऽन्यत्र निशामुपेत्य सुदृशो वाष्पाम्भसा स्नापिते
वीक्ष्यात्मप्रतिमां कपोलफलके सम्भोगचिह्नाङ्किताम् ।
मूर्द्धालक्तकमानतश्चरणयोश्चुम्बन् बलादाननं
धृष्टः स्वाधरपल्लवाञ्जनमपि प्रच्छादयन् प्रोञ्छति ॥९॥

चुम्बति कपोलपालीमलीकसौभाग्यमधुरमेकस्याः ।
तत्प्रतिबिम्बितमाननमन्यस्याः स्मेरतां नयत्ति ॥१०॥

भेदास्त्वेषां शतशो विमुग्धमध्यप्रगल्भाद्याः ।
प्रायेण तेऽपि कुशलैरुन्नेया नायिकाभेदैः ॥११॥

अथ नायिकाप्रभेदास्तत्र नवोढ़ा नवोढ़विश्रब्धा ।
मध्या तदनु प्रौढ़ा तासामग्रे क्रमादुदाहरणम् ॥१२॥

दृशं दूरात्पत्युः परिहरति किं श्रोष्यति वच-
स्तदासन्नं सद्म त्यजति किमुपायास्यति रहः ।
तदीयन्नामापि श्रुतिपथमुपेतन्न सहते
नवोढ़ा निर्व्यूढ़ामिह विमतिमुन्मुञ्चतु कुतः ॥१३॥

सखीभिरुपनीतया कर्रनिगूढ़नीवीपदं
प्रसुप्तमचिरोढ़या शयनसीम्नि पर्यङ्कमुखम् ।
तदङ्गपरिवर्तनं सुरतरङ्गसंनर्तनं
स्मरप्रणयमन्त्रिणा सुकृतिना परं प्राप्यते ॥१४॥

---

८. न्ति (का), म (का). Here ends ms. ग. १०. का omits. मधुर.
१४. ति (मा बी), स (का).

मयि प्रणयचञ्चलं रुचिरमञ्चयत्यञ्चलं
स्खलन्निबिड़नीविकानियमितैकपाण्यम्बुजम् ।
परेण बत पाणिना युगपदेव गण्डाधर-
स्तनावरणलुब्धया व्यवसितं न किं मुग्धया ॥१५॥

सीत्कारः कथमेष भाविनि भवद्दन्तव्रणैरुल्वणै-
र्वक्त्रं दर्शय दर्शयामि कितव प्रौढ़ापराधन्तव ।
इत्युद्वीक्षितुमुन्नमय्य वदनं द्राक्चुम्बतो राधया
गोविन्दस्य कराञ्चलेन चिबुकप्रान्ते प्रहारोऽर्प्पितः ॥१६॥

आसामथ प्रभेदाः प्रथमामुन्मुच्य कथ्यन्ते ।
धीराऽधीरा मिश्रा क्रमेण कियदप्युदाहरणमासाम् ॥१७॥

साकूतस्मितमेव नाधरतटीसीमानमुल्लङ्घते
किं वाणी हरिणीदृशः सहचरीश्रोत्रात्परत्राञ्चतु ।
केलीमन्दिरमध्यमागतमपि द्राक् प्राप्नुवन्ति प्रियं
प्राक्पुण्येन शिरोऽवगुण्ठनपटप्रान्तार्द्धरुद्धा दृशः ॥१८॥

मधुरिपुरुपयातीत्येवमुक्ते कयाचि-
च्चकितवलितवक्त्राम्भोरुहं राधिकायाः ।
समुदयति समन्तात्कज्जलोन्मज्जदञ्च-
त्कुवलयदलदामश्यामला लोचनश्रीः ॥१९॥

निभृतेक्षितैकताना मयि चिरमासीद्विदूरमासीने ।
प्रतिनेत्रोपनिपाते स्मितमधुरमधोमुखी स्थिता सुमुखी ॥२०॥

आसामपि प्रभेदास्त्रयःस्वकीया च परकीया ।
सामान्या चेत्यासां वदाम्युदाहरणमेकदेशेन ॥२१॥

---

१५. तव (मा टी), स्व (का), लुब्धया (का). १८. पु (का). २०. र्ध (का)
२१. प्रति (मा).

परिरभ्य प्रियं प्रेमप्रसारिपुलकाङ्कुरा ।
निस्साध्वसा सुखं साध्वी निशां नयति नायिका ॥२२॥

सातङ्कवारितनखाङ्कमसोढ़दन्त-
सम्पातमात्महृदयादपि शङ्कमाना ।
येनार्पितेह तिमिरे तरुणान्तराय
तस्मै नमः स्मरणजन्मशरासनाय ॥२३॥

श्रीमन्तं समुपेतमन्तिकमनुप्रेक्ष्यादरादुत्थिता
हस्तन्यस्तधनं प्रवेशितवती बद्धोत्सवं सद्मनि ।
सद्यः स्रस्तशिरोवगुण्ठनपटं प्रव्यक्तवक्षस्तटं
पर्य्यङ्के परिरभ्य नागरजनं वाराङ्गनाऽऽरोहति ॥२४॥

तासामष्टौ भेदाः (१) प्रोषितपतिकाऽथ (२) खण्डिता तद्वत् ।
(३) कलहान्तरिता च (४) तथाऽभिसारिका (५) विप्रलब्धा च ।२५।
(६) उत्कण्ठिता च (७) वासकसज्जा (८) स्वाधीनभर्तृका चेति ।
उच्यन्ते संक्षेपादेताः काश्चित् क्रमादुदाहरणैः ॥२६॥

सन्तप्तं वपुरेतदुज्झितमिव स्पन्देन संलक्ष्यते
विक्षिप्तं भुजमुन्मुमोच वलयश्रेणीयमेणीदृशः ।
तत्याजास्यमपास्तहास्यविरसं वाक् प्रेयसि प्रोषिते
प्रस्थातुं परिरभ्य कण्ठमहह प्राणैः परं स्थीयते ॥२७॥

निःश्वासेन ममाधरादपहृतो रागस्तवाऽर्य्यस्त्रिया
दीर्णन्तन्नखरैश्च तावकमुरस्त्वश्वेष्टितैर्म्मामकम् ।
शोणं जागरणेन ते मम पुनस्त्वद्वीक्षणेनेक्षणं
सर्वत्राऽस्मि समा तथापि विषमामाख्याय मां भ्राम्यसि ॥२८॥

---

२३. का is obscure. २४. क्षः प (का). २७. स्य (का), विवशं (का), सी (का). २८. स (मा), ख्या (मा हो), ह` (का). हो and मा miss this मा but हो has corrected it.

कोपिन्याः कतिधा व्यधायि न पदप्रान्तानतिः प्रेयसा
कुत्रासीदिह जातु जन्मनि पुनः सद्भावसम्भावना ।
तस्मिन्नेत्रपथादथापसरति प्राप्तानुतापज्वराः
सद्यः साश्रुझराः पतन्त्यनुचरीवक्त्रारविन्दे दृशः ॥२९॥

स्वापश्वासपरम्परां परिजनस्योवाच कर्णद्वयी
नेत्राभ्यामपि दर्शिता गुरुतमस्तोमावली देहली ।
पाणिभ्यां निभृतेन नूपुरमपाचक्रे पदाम्भोजयोः
सङ्केतोद्यमसम्भ्रमे वरतनोरासीन्मनोऽग्रेसरम् ॥३०॥

समुपेता सङ्केतादलुलितसकलप्रसाधना सुमुखी ।
अवचनमेव ब्रूते श्वसितेन सखीषु विप्रलब्धत्वम् ॥३१॥

वनमालिनि सविलम्बे वितर्क्कशतकर्क्कशान्मनसः ।
हृतया धीरतया मे चिरसहचर्य्याऽपि निर्य्यातम् ॥३२॥

मुहुरपि रचयति तल्पं पुनराकल्पं परामृशति ।
अधिकेलिगेहदेहलि-विन्यस्तविलोचना सुतनुः ॥३३॥

परिरम्भणैश्चिरनिरन्तरिताः
पुलकाङ्कुरैः किमपि दन्तुरिताः ।
परिचुम्बनैस्तरलिताश्शतशः
सुखमासते सुकृतिनां सुदृशः ॥३४॥

सप्तैकद्वयभेदास्तासामेवं सुहृद्भिरवसेयाः ।
एभ्यः पुनरवशिष्टान् ब्रूमो भेदान् महद्भिरुपदिष्टान् ॥३५॥

अन्योपभोगकलुषा मानवती प्रेमगर्व्विता मुदिता ।
सौन्दर्य्यगर्व्विता च प्रेमपराधीनमानसाऽनूढ़ा ॥३६॥

---

२९. न्ता (का), सु (मा का वी). ३२. का-text is mutilated.
३३. बाधयति (का). ३४. नै (मा), ष (मा), ३५. रपि (का).

सङ्गोपितसुरताऽथ क्रियाविदग्धा च वाग्विदग्धा च ।
क्वापि प्रोष्यत्पतिकाऽनुशयाना लक्षिता कुलटा ॥३७॥

स्यादुत्तमा च मध्या तथाऽधमा चेति सप्तदश ।
एता उदाह्रियन्ते भेदास्त्वासां सुहृद्भिरुन्नेया ॥३८॥
अनुशयवत्येवोक्ता प्रोष्यत्पतिका न भेदतो बहुभिः ।
परदेशादागच्छत्पतिकाऽपि यथा प्रमुदितैव ॥३९॥
सहचरि कियत्प्रेयःप्राप्तौ मुखं न स दर्शितः
परुषमथ वा सन्दष्टौष्ठं न किं समुदीरितः ।
अहृदयबहिर्भावात्सर्व्वं मयैव कृतं त्वया
बनुनयनं किं वा कुर्य्याः स एव गतत्रपः ॥४०॥
सवाष्पव्यालापं प्रसरदनुतापं प्रियतमे
समासन्ने साम्ना बहु सहचरीभिर्व्यवहृतम् ।
सनिश्वासं शून्याहितनयनमस्मेरवदनं
निविष्टाया मानः किमजनि कृशः पङ्कजदृशः ॥४१॥
सहचरि विरम ग्रथनान्मम कथनादस्य हारस्य ।
अस्मिन्नुरसि विनिहिते विरहित इव भ्रूयते दयितः ॥४२॥
कर्णे कान्तागमनवचनश्राविणि स्वर्णभूषां
तस्यादर्शिन्यकृत नयने श्यामिकामञ्जनेन ।
स्थाप्यः कुत्र प्रिय इति परामृश्य हारावृताङ्के
हृत्पर्य्यङ्के पुलकपटली-तूलिकामास्तृणोति ॥४३॥
सरसि न विहरन्ति किं तरुण्यः
सखि कथमेष ममैव दैवदोषः ।
मुखमिदमवलोक्य चक्रयूना-
मुदयति सायमिवायमार्त्तनादः ॥४४॥

---

३७. अत्र सर्वत्र च प्रवत्स्यत्पतिकेत्युचितम्. ४०. सु (का), सु (का), सत्त्वं (का), यै (बो). तबननुनयं (का). ४१. यां (मा). ४२. भू (का). ४४. यै (का), म(का).

हितमभिहितं दीना वाचो वदन् बहु पादयोः
पतति नियतं मानावेशे वशे भवति प्रियः ।
सहचरि समाक्रान्तं प्रेम्णा परन्तु चिरान्मनः
क्व नु बत पुनर्म्मानस्यास्मिन् मनागपि सङ्क्रमः ॥४५॥

आलि कपालिनि जटिले पत्यावस्याग्रहैस्तवालमिति ।
हरगतमिति दुस्सहमपि मुहुरपि मुखरान्निगादयति गौरी ॥४६॥

हंसैः शैवलमञ्जरीति कबरी चञ्चूभिराकर्षिता
वक्त्रे चन्द्रधिया चकार कुपिता चक्री नखैराक्रमम् ।
भृङ्गैः पङ्कजकोरकप्रतिभया वक्षोरुहो विक्षत-
स्तन्मातः करवै पुनर्न सरसीतोयावगाहोद्यमम् ॥४७॥

ग्रामतरुणस्य जाया सायाह्नसमागतेषु पथिकेषु ।
आसन्नविजनवटतटमावासस्थानमुपदिशति ॥४८॥

एकाकिन्या मम गृहमिदं यामिको मामकोऽन्धः
का मे नोदेत्यहह मनसस्तस्करेणात्र भीतिः ।
दैवेनैवं यदि न सुखितः स्याः श्रमेण प्रसुप्तः
पान्थ ब्रूमः किमिह सदृशो नैष नैशो निवासः ॥४९॥

मा रोदीः क्षणमेव रोदिमि कुरु प्रास्थानिकं मङ्गलं
सम्यक् साकमयं प्रयास्यति सखि श्वासानिलः प्रेयसा ।
प्राणांस्थापय तत्र कः प्रभवतु प्राणेश्वरे प्रस्थिते
चेतः स्तम्भय हन्त दैवहतकं क्वागादिदं वेद कः ॥५०॥

स्वयमेव सद्म तक्रे स्वशिरसि विक्रेतुमम्बया निहिते ।
सोद्वेगमनपराधामपि राधा सहचरीं शपति ॥५१॥

---

४५. म्ना (मा बी), ४७. बी corrects as "धि". ५०. प्रस्यास्यती (का), पीं (का). ५१. गग. .घाधां (का).

पूर्वस्मादधिकाधिकादरमिदं श्वश्रूषु शुश्रूषणं
भिन्नोऽयं परिचारिकासु विपुलाह्लादप्रसादक्रमः ।
अद्यान्यः प्रतिवेशिनीषु भवनाचारौचितीसम्भ्रम-
स्तत्किं केनचिदेणशावकदृशः प्रेमा समालक्षितः ॥५२॥

नाभूद् भूमिरियं सदैव सकला सङ्केतशय्यामयी
सर्वोऽप्येष बभूव नैव समयः प्रावृट्तमिस्रामयः ।
सृष्टिः प्रोन्मदपुम्मयी न विदधे दुश्चेतसा वेधसा
मातस्तात कथं घटेत कुलटेत्यस्मादृशीनार्य्यँशः ॥५३॥

कोपः समुत्पन्नविनष्ट एव
स्वान्तं प्रियप्रेमनिविष्टमेव ।
त्रासस्तदस्मेरनिमेष एव
क्रमः कुलीनस्त्रिय एष एव ॥५४॥

एकतः प्रणयपीड़नं मुधा
मानधारणरसादरोऽन्यतः ।
रक्षती द्वयमिदं मनस्विनी
निर्वृणोतु कथमत्र जन्मनि ॥५५॥

प्रकल्प्यापि प्रेयःस्खलितमनिशं मानविधुरा-
तरामास्ते वामा दिवसहिमधामायितमुखी ।
चिरं पादप्रान्ते निपततु परं प्राणदयितो
हतोत्साहं साहङ्कृति-कुपितमुन्मुञ्चतु कुतः ॥५६॥

इति श्री हरिहरसुभाषिते नायकनायिकाप्रभेदप्रकरणम् ॥१०॥

---

५२. दः (का). ५३. मा (मा दी). ५४. अपाणिनीयोयं प्रयोगः "स्त्रिया" इत्युचितम्. ५५. सु (दी)?. ५६. कुतुकः (मा).

## प्रकीर्णकप्रकरणम् ॥११॥

सभ्यानामनुरागं समीहमानः प्रसङ्गपतितानि ।
पद्यानि पठेन्नानाविधानि विबुधादिविषयाणि ॥१॥

सामगीतमपनीतशोचनं धाम तामरसलोचनम्भजे ।
मूर्ध्नि यच्चरणवारि धारयन् धूर्ज्जटिर्न्नटति पर्य्यटन्मुहुः ॥२॥

लम्बालकं तदालम्बे जम्बालकलुषं मुखम् ।
दृष्टं व्यादाय विस्पष्टं मात्रा यत्राखिलं जगत् ॥३॥

वृन्दारण्यविभूतिभूतलजुषां देवद्विषामायुषां
शेषं शेषशिरश्चिरायितधराभारावताराजिरम् ।
नन्दानन्दलतालवालमनिशोन्मादं यशोदामुदा-
माभीरीनयनाञ्जनं किमपि तत् कैशोरमैशं नुमः ॥४॥

कुत्रासीस्त्वमिति यशोदया सरोषं
संरुद्धे तनयधियाऽन्तरङ्ग एव ।
कालिन्दीपयसि पलायितस्य विष्णो-
रुत्तालं हसितमलङ्करोतु चेतः ॥५॥

त्वं चिरोपचितरोषलक्षणं किं करोषि यमकिङ्करेक्षणम् ।
नन्दमन्दिरविसारिवारिदश्यामलं मदवलम्बनं महः ॥६॥

स्वं सम्भाव्य यदङ्घ्रिवारिसरिदस्पर्शेन शोच्यं शिरः
सम्भोगप्रतिकूलमप्यचलभूरद्धं स्मरारेरभूत् ।
निर्म्माल्यप्रणयावशेन मनसा यस्याङ्गतो निर्गतं
चक्रे मन्दिरमम्बुजन्म जगतां धाता स पाताऽस्तु वः ॥७॥

---

१. नि (मा रा वी). ४. पु (का) ष्यु (मा रा). ५. त (मा रा वी). ७. वः (का), र्धं (का), का-text is mutilated.

स्वर्णदीतटवलज्जटाटवी-विस्फुटेन्दुकलिकैकपुष्पकम् ।
अङ्गसानुविलसद्भुजङ्गमं जङ्गमं स्फटिकभूभृतं भजे ॥८॥
पीयतामुदधिमन्थनोद्धृतं सादरैस्तदमरैःकिलामृतम् ।
कालकूटकवलस्य काटवं सोढुमीश्वरमृते न पाटवम् ॥९॥
सम्बिभर्तु भुजगेश्वरं गले भस्म लिम्पतु कलेवरे हरः ।
बम्भ्रमीतु वृषभेण कः परः पार्व्वतीप्रणयसुन्दरः सुरः ॥१०॥

प्रभवत भुवनानां निग्रहेऽनुग्रहे वा
ननु कलयत देवा नानुकारं हरस्य ।
निवसति शशिलेखा किं किरीटे परेषा-
महह वहति कस्य स्वर्धुनी मूर्धनीयम् ॥११॥

धौताः स्वर्धुनि मूर्द्धजास्तव जलैर्जाता जटाजूटतां
स्नातं वारिणि भस्मधूसरमभूदङ्गं क एष क्रमः ।
किञ्चान्यत्परिमार्ज्जनेन पयसो भालेऽनलेनोत्थितं
निष्पीतेऽम्बुनि कण्ठ एव गरलज्वालाकुलः क्लाम्यति ॥१२॥
यस्य यस्य तव जातु शीकरः स्वस्तरङ्गिणिशिरोऽधिरोहति ।
तेन तेन चरणोदकीकृता मोदमञ्चसि क एष विभ्रमः ॥१३॥
स्पर्द्धामर्द्धाङ्गिन्याः काऽन्या कर्त्री गिरीन्द्रनन्दिन्याः ।
सा तदपि जह्नुकन्या मूर्द्धन्या धूर्ज्जटेर्ज्जयति ॥ १४ ॥

त्रिजगति नगरीणां रीतिराजानकीयं
भवति नृपतिरेकः सन्तु पौराः सहस्रम् ।
इह पुरहरपुर्य्यामस्तमर्य्यादतेयं
दिवसमपि निवासी यः स काशीनरेशः ॥ १५ ॥

---

८. का misses this verse. १०. भ्र (वी). ११. तु (का), भ (रा); तु(का), वो (का). रहस्य (मा रा). १२. ता (का). मा and रा miss न. १३. त (का), नि (मा रा वी). १४. Sixteenth verse in का, coming after अहो महीयसां etc.

शैलाः सन्तु शतं सुमेरुहिमभृन्मैनाकविन्ध्यादयः
किन्त्वेषां महिमावधारणविधौ गोवर्द्धनो वर्द्धते ।
सप्ताहानि मुरारिपाणिकमलक्रोड़ोपरि क्रीड़ता
येन क्ष्माधरलक्षपक्षदलनः शक्रोऽप्यनुक्रोशितः ॥ १६ ॥

अहो महीयसां पुंसामुपर्युपरि पौरुषम् ।
रामेणाजगवं शम्भोर्भग्नमम्भोजनालवत् ॥ १७ ॥

तुल्यं गाधिसुतेन वन्दितमथोपात्तं सहैतद्गिरा
गाढ़ं किञ्च गुणे समं स्वजनुषा सद्यः समायोजितम् ।
वैदेहीहृदयेन दाशरथिना द्राक् साकमाकर्षितं
भग्नं भूमिभुजां भुजार्गलमदैस्सार्द्धं स्मरारेर्द्धनुः ॥ १८ ॥

वत्से वेत्सि कुलं त्वमेव कलयेः शुश्रूषणं लक्ष्मणे
जानात्याचरितं विपत्तिविधुरे पत्यावपि त्वादृशी ।
विन्ध्यारण्यचरीवरीषु शवरीसख्यं विदध्या इति
ध्यातं वक्तुममज्जि लोचनपयःकुल्यासु कौशल्यया ॥ १९ ॥

यदेतन्मे चेतः कनकहरिणेनाहृतमभू—
न्मम त्रासाक्रन्द्रे त्वमपि बत सन्देहमकरोः ।
हृता सीता दैन्यान्यकृत नियतं हारिणि खले
कुले कुत्सा वत्साजनि चिरमियं चण्डमहसः ॥ २० ॥

वत्सैतत्सैकतमिह शिला शीतला सैव सैषा
वीरुल्लेखा विरुतमपि तत् पाव-पारावतानाम् ।
गोदा मोदानजनयदियं यैरमून्येव सद्यः
सीताशून्ये विचरति मयि प्राणहाराः प्रहाराः ॥ २१ ॥

---

१६. क्य (का), १८. तु (का), सु (का). कु (का). १९. किलये, (का), तु (बी),
चिराय(का बी) and added in मा as a variant—इति वा पाठः, मु (का),
तुं (का), २१. का misses these two verses. बि(मा रा)पाव or पारे?.

त्वं तादृशी मम दृशीव निपात्य पांशु—
मुष्णांशुवंशवनिताऽपहृता परेण ।
अद्यापि चेत्तदुचितं न किमप्यतानी—
ज्जानीहि जानकि न जीवति रामचन्द्रः ॥ २२ ॥

वाणान् वारिकणान् किरन्नवतडित्सञ्जातसिञ्जागुणं
वार्म्मुक् कार्म्मुकमेतदैन्द्रमधुना सन्धाय किं धावसि ।
किं सम्पाद्य कदम्बकुड्मलकुलैर्द्दावानलैर्द्दुर्दिनं
वैदेहीविरहेऽपि जोवितभृतो रामस्य किं दुस्सहम् ॥ २३ ॥

हा धिक्! कां दयिते दशां परवशा केकाभिरेकाकिनी
व्योमव्यापिनि कोपिनि प्रमुदिते पाथोधरे प्राप्स्यसि ।
मिथ्या वेत्थमशङ्कि जीवितमसि त्वं रामभद्रस्य मे
देवि स्याः सहनक्षमा न विपदः कस्याः क्षमानन्दिनि ॥२४॥

स्नपय धरणीं धारासारैः प्रमोदय वर्हिणः
कुरु कुसुमितान्नीपानापो निपायय चातकान् ।
न खलु तडिता दत्तालोकां तनुद्युतिविद्विषा
ननु जनकजां गर्ज्जेर्ज्जातु त्वमम्बुद तर्ज्जयेः ॥२५॥

*अत्यन्तव्यवधानलब्धजनुषो जात्यापि भिन्नक्रमाः
सान्निध्यं विधिना कुतूहलवता कुत्रापि सम्प्रापिताः ।
गच्छन्त्याभरणं गुणव्यतिकृता भेदं न भूमीरुह-
स्ते काष्ठावपि निष्ठुरा गुणगणैर्य्ये नैकतां प्रापिताः ॥२६॥

२३. का-text mutilated, दृम (वी). २४. हे हे का (का), सी (रा), स्याः (वी)? स्या (मा रा), नी (मा वी). २५. का misses this verse, षु (मा रा वी), २६. *वी remarks अप्रस्तुतप्रशंसा, न्स्या म (का), णं (वी), म (का).

गुणगौरवमेव गाहमानाः कृतिनः किं कलयन्ति दूषणानि ।
न जहाति विहारिनक्रचक्रं बत रत्नाकरवारि दानवारिः ॥२७॥

सौजन्यधन्यजनुषः पुरुषाः परेषां
दोषानपास्य गुणमेव गवेषयन्ति ।
त्यक्त्वा भुजङ्गमविषाणि पटीरकोषा-
त्सौरभ्यमेव पवनाः परिशीलयन्ति ॥२८॥

विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वतः सुजनः ।
क्षारं पिवति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ॥२९॥

उत्कर्षवान्निजगुणो यथा यथा याति कर्ण्णमन्यस्य ।
धनुरिव सुवंशजन्मा तथा तथा सज्जनो नमति ॥३०॥

म्लायसि परनिःश्वसितैः स्वच्छतया कं निवेशयसि नान्तः ।
अयसा त्वन्निर्माता मुकुर ! विधाताऽप्ययोमयो भवति ॥३१॥

समेत्योपासितो याभिः क्षीणः क्षीणोऽधिकाधिकम् ।
पूर्णः पूर्णः क्षपाकृत्तास्तारा नारादपीहते ॥३२॥

अकलङ्कान्तिके कान्तिकेति काऽलङ्कलङ्किनः ।
अरुणे तरुणे मस्या धावं कामयते शशी ॥३३॥

आसीत्कल्पमुदन्वदम्बुनि चिरम्भेजे च भालानलं
भर्ग्यस्य प्रतिमासकर्महुतभुक्कुण्डेप्यहौषीद्वपुः ।
तीव्रैरेव तपोभिरिन्दुरकरोदित्थं जनुर्य्यापनं
किं कुर्य्याद्विधुरो न वाञ्छति विधिस्तल्लाञ्छनप्रोञ्छनम्॥३४॥

---

२७. गणयन्ति (का), वारि (वी). २८. का and रा both miss this verse, वी also misses this. ३१. नि (मा रा वी), हु (का). ३२. का misses these two verses. ३३. ..कान्तिःकेति कालङ्कु..(वी), य (वी), वका (मा रा) वी illegible. ३४. म्बु (का). हो (का), र्जा (का).

क्षीणः क्षीणः क्षपयसि निशाः पूर्णतायां पुनस्ते
राहोरास्ते भयमयमपि स्वान्तशल्यं कलङ्कः ।
एतास्वापत्स्वपि हिमरुचे त्वां विनोल्लासलोलं
कोऽलङ्कुर्यात्सपदि सकलं भूतलं भाभिराभिः ॥३५॥

राहोः पार्वणचर्वणे कतिपये ग्रासाः किलैताः कला
देवानां पिवतामिमे च कतमे पीयूषगण्डूषकाः ।
भानौ लोप्तरि दीप्तिमत्कियदिदं बिम्बं सुधांशोरसौ
धत्ते शीतलशीलतैव जगदुत्साहाय साहायकम् ॥३६॥

अपि दोर्भ्यां परिरब्धा बद्धाऽपि गुणैरनेकधा निपुणैः ।
निर्गच्छति क्षणादिव जलधिजलोत्पत्तिपिच्छिला लक्ष्मीः ॥३७॥

कस्य करान्नस्खलिता नीरनिधिक्लेदपिच्छिला लक्ष्मीः ।
भृगुचरणधूलिपरुषे हृदि परिबद्धा हरेः स्थिरेयमभूत् ॥३८॥

धत्ते वक्षसि कौस्तुभोपलमयं मत्वा श्रियः सोदरं
तन्नाभीगृहमाकलय्य मकरावासं मनाङ्नोज्झति ।
तन्नामप्रणयान्न लुम्पति हरिः श्रीवत्समङ्के स्थितं
किं केन क्रियतां स एव यदभूदेवंदशः स्त्रीवशः ॥३९॥

अपारे पाथोधौ किमिति सतिमिग्राहगहने
निलीय श्रीनाथः स्वपिति भुजगे शङ्कित इव ।
किमेतावद्भिर्वा भवतु किल सर्वातिशयितः
श्रिया संश्लिष्टाङ्गो व्यपगतभयं को निवसतु ॥४०॥

लक्ष्मीजनयितुर्जाताः कियन्तो जलजन्तवः ।
सुत्रामप्रार्थनापात्रं सोदरोऽस्याः सुरद्रुमः ॥४१॥

---

३५. प (मा रा). ३६. का misses this verse, ३७. बद्धा (मा डी) त्पातिपिच्छिला or त्पातपिच्छिला (का), मा and रा have only one त in त्ति. ३८. वि (का), रब्धा (मा का डी). ३९. न्ति (रा), कृ (रा), श (मा डी). ४०. हि (मा), प्रि (का). ४१. स्वत्रास (का).

येषामेकतरेण केनचिदपि प्राप्तेन पर्युत्सुको
मर्यादामवसाद्य माद्यति जनः क्षोणीमपि क्षोभयन् ।
वीचीभिर्व्विलुठन्ति तानि परितो रत्नानि वारां निधे-
र्न्नायं प्राक्प्रकृतिं जहाति महतां वित्तैर्विकारः कुतः ॥४२॥

एकोऽम्बुधिर्ज्जगति जीवति येन तानि
तावन्ति हन्त सलिलानि समुच्चितानि ।
येभ्यः कथञ्चिदपि किञ्चिदमी पयोदाः
पीत्वा चिराय धरणीमपि तर्प्पयन्ति ॥४३॥

शैला निलीना निभृतं यदन्तः शैवालबालाङ्कुरकोटरेषु ।
स एव पाथोधिरगस्त्यहस्तरेखाविशेषान्तर एव तस्थौ ॥४४॥

देवैर्य्यद्यपि तक्रवद्विमथितः केदारवद् वानरै-
र्बद्धः सिद्धवदञ्जनात्मजनुषा कुल्यावदुल्लङ्घितः ।
किञ्चासीच्चुलुकेऽम्बुविन्दुवदयं द्राक्कुम्भयोनेर्मुने-
र्नापारोयमिति प्रथा जलनिधेरासीत्तथापि श्लथा ॥४५॥

धिग्धिग्विधेर्विलसितानि कदर्य्यमेव
यत्केवलं धनमनुक्षणमावृणोति ।
एको हि वारिधिरपेयपयोमयोऽय-
मस्यान्तरेव सरितः परिपूरयन्ति ॥४६॥

पद्मपाणिनु मनाक् कुहेलिके
हेलिकेलि-परिपन्थिनी भव ।
मुञ्च शीकरभरेण वारि वा
वारिवाहपदवी दवीयसी ॥४७॥

---

४२. नि(मा). ४३. यावन्त (मा), तावन्ति (वी). ४४. त (मा रा), ना (मा रा). ४५. व (का वी), वी corrects as त. ४७ .नि (मा रा)?. सि (मा).

यावद् वियोगविधुरां मधुरादरेण
भानुर्व्विनोदयति पङ्कजिनीं करेण ।
दुर्दैव-दुर्विलसितोन्नमितेन ताव-
दाक्रान्तमम्बरमनेन दुरम्बुदेन ॥४८॥

त्वां दर्शयन्त्युदरमम्बुधिशुक्तयोऽन्त-
रासामवाकिर पयोधर वारिबिन्दून् ।
स्वातीमतीत्य पुनरेष्यति मौक्तिकाना-
माधानसाधनमयं सुचिरेण कालः ॥४९॥

कैः क्लान्तैस्तरुवीरुदादिभिरदःप्रत्याशया न स्थितं
केषां वा न पुनः प्ररोहमकरोदम्भोभिरम्भोधरः ।
एतैरत्र कथं मनोरथमहाभारोऽयमारोपितः
कस्मादेष समादधे किमथवा सम्भाव्यते नोन्नते ॥५०॥

किं शालशाल्मलिधरादिषु वारि दत्से
तत्सेचनादतिघनादपि कुत्र कीर्त्तिः ।
निर्व्वापयन् यदि न धावसि दावदाह-
मस्याम्बुवाह-कुलनन्दन चन्दनस्य ॥५१॥

ऊषरे सरिति शाल्मलीवने दावपावकचितेऽपि चन्दने ।
तुल्यमर्प्पयति वारि वारिदे कीर्त्तिरस्तु गुणगौरवैर्ग्गतम् ॥५२॥

धारासारेषु धाराधर नव तरवो नूतनोत्पन्नपर्णाः
पूर्णा नद्योऽपि सद्यो दिशि दिशि निखिलोल्लासभूवासभूमिः ।
भूयो भूयोऽपि काकुं कलयति विवृतश्रोटिरुद्ग्रीवकायं
नायं प्राप्नोति पाथोलवमकरुणता चातके तात केयम् ॥५३॥

४८. का misses this verse. ४९. Both मा and रा have मवाकिम. रा has added र before second म without omitting it but मा stands uncorrected, वारिदानां (का). ५० नास्थितं (मा दी) रा corrects न, व (का रा). ५१ का misses this verse. ५३. इ (का), र्णाः (दी), रा (मा), भोटिरुन्नमुरिति दी, चि (का दी) मपकरुणा (का).

नीरनिधेरपि नीचान्नाचामति चातकः प्रचुरमम्भः ।
अपि शीकरमुत्कन्धरमुन्नतमम्भोदमर्थयति ॥५४॥

मा धाव तात चातक वारिमुचान्तारतम्येन ।
सम्मिलितजलदकोटिस्त्रोटिपुटीपूरमेव तोयन्ते ॥५५॥

प्राप्य प्रावृषमखिलस्तवाधिकारः परोपकारस्य ।
परिहर पयोद चातक-याचन-वैमुख्य-पातक-प्रणयम् ॥५६॥

समारूढ़ः शाखामपि कपितुराषाडुपरिचे-
त्कुचेष्टा-दृष्टान्तःकरणमनुवेलं विहरति ।
अधस्तादप्यास्तामुपलशकलाधिष्ठितमहो
महो नैशानीयं समुपहसनीयं सुमनसाम् ॥५७॥

मणिरवनिभृन्मस्तन्यस्तो जगन्ति जिगाय यः
शवरपरिषन्मध्ये धातः कुतस्तमपातयः ।
ग्रथनविधये यन्न स्विन्नोऽप्यभिद्यत कण्टकै-
स्तदिह यदयं गुञ्जापुञ्जैर्ज्जितः परिवर्ज्जितः ॥५८॥

अनुरूपमिदं कूप छद्मच्छन्नस्य किन्न ते ।
सन्मार्गविभ्रमान्मार्ग-पातोऽयं यन्निपातितः ॥५९॥

आलापं कलकण्ठिका न कुरुते कीरा न धीरस्वरं
व्याहारं कलयन्ति कोमलगिरः कूजन्ति नो बर्हिणः ।
लिम्बाडम्बरदुर्दिने बत वने दूरे द्विरेफध्वनिः
काकाः केवलमेव काङ्क्रतिकृतः कुर्वन्ति कर्णज्वरम् ॥६०॥

---

५४. रा misses both चा and म, सी (का), र्पं (का). ५५. पु (रा). ५६. प्या (मा and रा) corrected प्य in रा. ५७. का misses this verse, दृ (वी), स्या (मा), स्न ? (रा). ५८. का misses this verse also, तुः कु (रा). ५९. मार्गःपातो (मा का वी), य (वी). ६०. का gives शम्पा as an alternative reading, काः (वी).

मलिनस्यागुरोरेष नामरूपसमः क्रमः ।
तथोपलालितो नायं सुखाय ज्वालितो यथा॥६१॥

लोचनं रचय चञ्चलतारं
वाम्याञ्चलमुदञ्चितहारम् ।
लास्यमन्यदिह पामरि किञ्चि-
न्नागरी हरति येन जगन्ति ॥६२॥

अविभ्रमालोकनदुर्भगाणि प्रव्यक्तवक्तस्तनमण्डलानि ।
अङ्गानि रे पामर कामिनीनामपुण्यतारुण्य किमाश्रितानि ॥६३॥

कति सन्ति नोन्नतिभृतस्तरव-
स्तदपि त्वमेव गुरुकीर्तिवरः ।
निविड़ादरं नवमरन्दहरः
सहकार कारणमिह भ्रमरः ॥६४॥

सुखमास पङ्कजनिवासपरः
सरसीषु विभ्रमरसी भ्रमरः ।
समुपैति काननपथाप्यवशः
स हि केसर त्वदनुरागरसः ॥६५॥

यदभञ्जि पङ्कजमखण्डि दलं
न ततोऽवसीदति सरोजवनी ।
यदकारि कन्दकवलः करिणा
परिणामतस्तदिह दुर्विषहम् ॥६६॥

पीत्वा मधूनि मधुपाः क्रोड़े क्रीड़न्तु कमलिन्याः ।
प्राणेशो रविरन्तर्विकसति यस्यावलोकनादस्याः ॥६७॥

---

६१: मक्रमः (का), ते(का). ६२. का text mutilated. ६३. नि (मा रा दी) नागरीना(दी). ६४. ता(का),निविलापरं(मा and रा)नविलादरं (का), क (दी). ६५. आस is un-Paninian अपाणिनीयम्. धीः(का), रा corrects as यदुपैति। रामासान्तविधिरत्रोल्लङ्घितः। ६६. पयान्त (दी). ६७. स(मा रा दी).

एतावन्तं समयमनयः केसरोत्सङ्गरङ्गी
हृद्भृङ्गीनां सततमहरस्त्वं सरःसञ्चरेषु ।
दैवादस्मिन् मधुप निपतन् कानने केतकीना-
मेतां दीनामनुभव दशां कीलितः कण्टकेषु ॥६८॥

स्वच्छन्दं सरसीषु सौरभमयं माध्वीकमास्वादयन्
कल्लोलावलिदोलितेषु कमलक्रोडेषु विक्रीडसि ।
धिग् धूलीं कवलीकरिष्यसि तले सूचीमयानामरे !
गूढः स्थास्यसि मूढ मास्वसि यदि त्वं केतकीकाननम् ॥६९॥

धूलीभरो दृगवरोधमहान्धकारः
पत्राणि किञ्च करपत्रसहोदराणि ।
एतन्न चेत् परिमल त्वमलङ्करोषि
स्यात्केन केतकतरोरितरोपयोगः ॥७०॥

जातिख्यातिभृतां हिताय जगतः स्वल्पाऽपि सम्पत्सतां
भूयस्योऽपि जनस्य नोपकृतये नीचाश्रयिण्यः श्रियः ।
आमोदाय चिराय चन्दनतरोः क्षोदोऽपि चूर्णीकृतः
सर्वेषामफलः फलाचितमहाशाखोऽपि शाखोटकः ॥७१॥

त्वमप्यस्तव्यस्तो यदि भवसि जम्बालयमित-
स्तृणस्तम्बे स्तम्बेरम किमवलम्बेन लभसे ।
विमुञ्च द्राक्चिन्ताभरमथ समन्तान्मदझर-
प्रपातैर्निःपङ्कं किमिति सरिदङ्कं न कुरुषे ॥७२॥

बलं विशालं विपुलं वपुर्वा गर्वाद्वहन्तो विहरन्तु वन्याः ।
किं केसरी स्वं नखरं निधत्ते मत्तेभकुम्भान्तरमन्तरेण ॥७३॥

---

६८. स्र (का), दृग् भ (का), पम (का), ष्ठ (मा रा). ६९. धिग्धूली (का) धिग्धूली (मा रा) रा has धिग्धूली corrected as दृग्धूली, सि (बी), ले (मा रा का बी), नि (बी), मस्त्यम (रा), वस्या (मा बी). ७०. त्वार (का), त्व (का) न (का). ७१. ल्पो (मा) रा corrects as ल्पा. व्य (मा रा). ७२. [illegible]

वारितवान्मदकरिणां नखरेण खरेण बृंहितं सिंहः ।
कुपितोऽपि तरलफेरवकण्ठरवं केन वारयतु ॥७४॥

आन्दोलयन् गिरिनिकुञ्जकरञ्जराजी-
र्न्राजीगणः कलभ कञ्चन पौरुषेण ।
ईषत्समुन्मिषितलोचनकोण एव
कण्ठीरवे किमिति जीवितमुज्जहासि ॥७५॥

रे दन्तावलशाव तावकमिदं कुत्रोर्ज्जितं गर्ज्जितं
कीदृग्वा गिरिकन्दरासु नितरां शुण्डारविस्फारणम् ।
भूयाद्वा किमिहाटवीविटपिनां शाखामुखामोटनं
स्याच्चेदेष विशेषतस्त्वयि घृणाकुण्ठो न कण्ठीरवः ॥७६॥

येषु प्राक्प्रकृतेषु निस्सरदसृग्धारानुसारापत-
न्मुक्ताजालनिरन्तरालमभवत्कान्तारभूमीतलम् ।
पारीन्द्रस्य खरास्त एव नखराः स्यात्कुत्र तत्पौरुषं
शून्या एव यदुद्भटैः करटिभिर्भूभृत्तटीभूमयः ॥७७॥

करिमदपरिमलवाही वहति बहिर्गिरिसरित्समीर इति ।
मृदुगर्भान्तर्भावं न जहाति गुहागृहस्य हरिगृहिणी ॥७८॥

इति श्रीहरिहरसुभाषिते प्रकीर्णकप्रकरणम् ॥११॥

---

७४. तव न (का). ७५. द्ध (रा) ल्वि (रा), ल्लि (का), ल्लसित (वी) ज्जि (का). ७६. वा (मा रा), but corrected as द in रा. त (का). आशीर्लिङ्गोऽनौचिती. सु (वां). ७७. [ पात (का) ]. ७८. का misses this verse. इव (वी).

## परमार्थप्रकरणम् ॥१२॥

सुभाषितैराहृतेभ्यो हृदयेभ्यो महीभृताम् ।
समाप्नुवन्ति सुधियः स्वयमेव समीहितम् ॥१॥

सुभाषितेन विद्वांसः शूराः सङ्ग्रामकर्मणा ।
नीत्याऽमात्याः प्रजा वित्तैराहरन्ति महीभुजम् ॥२॥

विद्वान् "विदाय" मादाय प्रेमभाजो महीभुजः ।
दर्शयित्वा फलङ्किञ्चिदनुज्ञातो निवर्त्तते ॥३॥

चिरं विलम्बो विदुषां विदेशेषु विगीयते ।
स्वल्पमप्यल्पकालेन तस्मादभ्याहृतं हितम् ॥४॥

तवौचित्यान्महत्त्वस्य माऽस्तु निन्द्यो मनोरथः ।
नोन्माद्य खेदयात्मानमप्यलीकमनोरथैः ॥५॥

नेष्यामि लक्षमेवेति प्रतिज्ञाय भ्रमन् भुवम् ।
प्रपेदे पुनरावृत्तिं न महादेवठक्कुरः ॥६॥

देशान्तरे वयो नीतं गतं लोकान्तरेऽथवा ।
विभावयन्तु विद्वांसो बन्धूनां किं विशिष्यते ॥७॥

एकतोऽपरितोषश्चेदन्यमन्यं महीभुजम् ।
निदाघपान्थवच्छायामन्यामन्यामुपाश्रयेत् ॥८॥

राजानमन्यमन्यं यत् संश्रयन्ते मनीषिणः ।
राज्ञामेव यशो-मोषो नैष दोषो मनीषिणाम् ॥९॥

द्रष्टव्याः कष्टगम्येऽपि नगरे नगरे नृपाः ।
प्रापकादृष्टसंसृष्टः कश्चित्स्याऽेव कस्यचित् ॥१०॥

चिरं विनिर्गमो बन्धुवर्गमोदापनोदनः ।
तस्मादपूर्णकामोऽपि समेत्य प्रवसेत्पुनः ॥११॥

---

३. प (का). ४. भ्या (का). ५. त्वौ (ढी). न्द्यो (ढी), न्यूनो (का), खे (मा रा).
७. पि (का). ८. ष (मा ढी).

धात्रा वक्रेण धनुषा गुणोत्कर्षेण मार्गणाः ।
अपि लब्धेषु लक्षेषु प्रक्षिप्यन्ते पुनः पुनः ॥१२॥
अर्थानाहरतोऽनर्थाः समायान्ति प्रमादिनः ।
अप्रमत्तस्ततो मार्गे नित्यमेवास्तु वित्तवान् ॥१३॥

हरिनाथो मनाक्पाथोमज्जनादर्जितं चिरात् ।
पथि प्रकटचौरेण हा धिक् ! धनमहारयत् ॥१४॥
मारयन्ति नराः क्रूरा दूरादाहरतःश्रियम् ।
वाटपाटच्चरैर्न्नाशिन्नीतःशङ्करठक्कुरः ॥१५॥

अर्थस्योपार्ज्जनं कष्टं कष्टमस्य गृहागमः ।
तस्यागतस्य बन्धुभ्यो विनियोगः सुखावहः ॥१६॥
अर्थस्यानर्थपूर्णस्य कोऽवसीदतु संग्रहे ।
तत्सन्तुष्टैर्न्नचेदिष्टैर्दृष्टैः स्यान्नयनोत्सवः ॥१७॥

तानि वित्तानि किं येषां विनियोगो न बन्धुषु ।
निन्द्या विद्याऽपि सा यस्याः विनोदः स्यान्न संसदि ॥१८॥
शरीरभरणेनैव पर्याप्नोति न पौरुषम् ।
परोपयोगशून्यस्य वैशाल्यं शाल्मलेरलम् ॥१९॥

पुण्यरत्नभृतः पाणिः प्रार्थकेन प्रसार्यते ।
धन्यस्तदङ्कमायाति माद्यन्मुकुलितः करः ॥२०॥
निन्दास्वार्याः कदर्याणामलं वाचां विलम्बनैः ।
यैर्य्याचितैर्मिषान्म्लानैःकालिमाऽऽस्ये स्वयं धृतः ॥२१॥

याच्ययाचकयोस्तत्त्वे शिलोद्गाढे किलोरसी ।
अन्योन्यं मुखमालिन्यमीक्षतोर्य्ये न दीर्य्यतः ॥२२॥

---

१३. र्गो (का). १४. णा (का), चो (का). १५. प्रि (का). १७. ष्टे (का). २०. धा (का). २१. म्ला (मा रा दी), नै (का). २२. का misses the verse ईक्षतोरित्यशाणिनीयम्, पश्यतोरित्युचितम्.

अर्थिनो जठरज्वालादग्धा वाक्कञ्चिदञ्चति ।
ताञ्चाशमयतो वित्तं किन्निमित्तं न विद्महे ॥२३॥

वर्तुलैरप्यलं वित्तैयत्तैर्न्नोपार्जितं यशः ।
लक्षैर्न्नवभिरप्यासीत्काशीमिश्रोऽप्यनामकः ॥२४॥

विद्यामध्यापनैर्द्दानैर्व्वित्तं नित्यमलङ्कुरु ।
पुरा कीर्त्तिर्व्वटेशादीनाविवेशाऽमुनाऽध्वना ॥२५॥

सर्वस्याप्यविशिष्टन्तद्धनं यन्नोपयुज्यते ।
चौरादिभीत्या धनिनान्निशौन्निद्यं विशिष्यते ॥२६॥

धने किमिति कार्क्कश्यन्निधने यद्विमुञ्चति ।
यन्न मुञ्चति पर्यन्ते तदर्ज्जय धनैर्य्यशः ॥२७॥

भ्रातरापूर्य्यसे वित्तैर्द्दीयतां दीयतामिदम् ।
जलेनानपनीतेन पूरिता नौर्न्निमज्जति ॥२८॥

धारणेनालमेतस्य विपरीतमिदन्धनम् ।
धृतन्न प्राप्यते भूयस्त्यक्तं भूयोऽप्यवाप्यते ॥२९॥

दशान्तरवशान्निशादिवसयोरिवास्त्येव चे-
द्विसंघटनतो मिथो भिदुरता विपत्सम्पदोः ।
अतस्तव तदागम-व्यपगम-त्रसच्चेतसो-
ऽप्यदो जगति जीवितादपि न हीयतां सद्यशः ॥३०॥

विनोदः साधुभिः सार्द्धम्प्रतिपादनमर्थिषु ।
विद्याश्रियोर्द्वयोरेतच्चिरोपार्जितयोः फलम् ॥३१॥

विद्याविनोदैर्व्विदुषां वरीयान् वयसो व्ययः ।
श्रेयस्यो दानभोगाभ्यां श्रियो निःशेषिता अपि ॥३२॥

---

२३. तां च स (का). २७. र्य्यं (रा). ३०. का and री miss this verse
३२. सो (मा रा दी).

विनयेन वदान्यत्वं मदास्पर्शेन पौरुषम् ।
पूर्वेण तपसा पुंसां द्वाभ्यां द्वयमलङ्कृतम् ॥३३॥

नम्रीभूया भृशं भ्रातर्य्यद्यस्ति* फलगौरवम् ।
चेदनम्रं शिरः शालेरिव तुच्छं फलं तव ॥३४॥

परोपकृतये जाताः साधवः शालयो यथा ।
शिरश्छेदेऽपि नोज्झन्ति फलसम्पत्ति-नम्रताम् ॥३५॥

नीचाशयानां सम्पत्तिः प्रतिवेशि-विपत्तये ।
निपाताय तटस्थानां सद्यो नद्योम्बुपूरिताः ॥३६॥

धनाभिजनविद्याभिर्य्यद्यायातो न दुर्म्मदः ।
गोविन्दानुगृहीतोऽयमिति ह्रीतोऽवधार्य्यताम् ॥३७॥

मदोन्मादविहीनेन सततं प्रियवादिना ।
क्रीतमेतत्सुकृतिना जगदेवाकपर्दकम् ॥३८॥

अस्मिन् परस्परद्वेषपरुषे पुरुषायुषे ।
केवलं मधुरा वाणी ददात्यानीय सौहृदम् ॥३९॥

ये सतामवमन्तारस्ते गन्तारः पराभवम् ।
स्वाराज्यान्नहुषो विप्रावलेपाद् विनिपातितः ॥४०॥

आचरन् बहुभिर्व्वैरमल्पकैरपि नश्यति ।
जनैः प्रत्यायितोऽमात्यं प्रेतमित्यत्यजन्नृपः ॥४१॥

विरोधेनाधमस्यापि न महानपि मोदते ।
अपि दासीकृतेनासीद् वनवासी रघूद्वहः ॥४२॥

परिष्वङ्गोऽपकर्षाय हीनजातिषु जायते ।
रामस्यापि कपिः स्कन्धमारुरोहादृतः पुरा ॥४३॥

---

३४. *Here ends the Ms. दी on folio No. 58. ३७. हे (मा रा) ३९. र्पं (का). ४१. पि (मा रा). ४२. मः (मा रा). ४३. पि (मा रा).

जन्म तन्मन्महे धन्यं संसर्गो यत्र सत्तमैः ।
सौभाग्यं पश्य निम्बस्य चन्दनाचलजन्मनः ॥४४॥

एको गोत्रे पुमान् प्रोक्तः प्राक्तनैः स्वकुटुम्बभृत् ।
एकोऽप्यनेकः पुरुषः परेषां भरणक्षमः ॥४५॥

को निजः कः परो लोके शोकेनाद्यो विशिष्यते ।
निजः स एवोपकृते यशो यत्रावशिष्यते ॥४६॥

व्ययमायक्रमेणैव कुर्व्वन्त्यायतिदर्शिनः ।
यावदास्तरणं पादप्रसारणमिति स्थितिः ॥४७॥

क्षयाय जायते पुंसामायादत्यधिको व्ययः ।
मिताशी योषितां रन्ता किं तात ! सुखमेधते ॥४८॥

अविचारेण यत्कर्म कृतं तन्मर्मकृन्तनम् ।
प्रसह्य सीताहरणादतीता रावणश्रियः ॥४९॥

सम्पद्यमानमालोक्य श्रेयः सद्यः समाचरेत् ।
दहत्यामरणं कर्म विलम्बेन विनाशितम् ॥५०॥

कष्टङ्कर्मेति दुर्मेधाः कर्त्तव्याद्विनिवर्त्तते ।
न साहसमनारभ्य श्रेयः समुपलभ्यते ॥५१॥

किं वा बहुभिराख्यातैस्तत्कुर्व्वीथाश्चिरं यथा ।
त्वाङ्गायति सतामग्रे यशोभिरवशो जनः ॥५२॥

एकन्तु लोकवेदेभ्यः सारमाकृष्य कथ्यते ।
प्राणात्ययेऽपि न त्याज्यो न्याय्यो धर्मश्लथः पथः ॥५३॥

अत्यल्पं जीवितं पापान्यापातमधुराण्यलम् ।
तदाचर चिरास्थेयपरलोकावलोकनम् ॥५४॥

---

४६. वि (मा रा). ४९. कृन्तनमित्यपाणिनीयम्-कर्त्तनमित्युचितम्. ५३. गो (मा रा). थे थि (मा रा). ५४, स्ते (का).

अवधारय धर्मेषु प्रधानमवधानतः ।
निर्भरानन्दकन्दाय गोविन्दाय मनोर्प्पय ॥५५॥

कुर्य्युः के वा न सेवाभिर्द्देवास्ते वाञ्छितां श्रियम् ।
वाञ्छातोता चिरस्फीता प्रीतात्पीताम्बरादियम् ॥५६॥

आकर्ण्य वाणीः पौराणीर्मयैतदवधारितम् ।
तिष्ठन्तु देवा देव्योऽपि सेव्यो नारायणः परः ॥५७॥

स्मरत्यहह किं कामी यामीमपि न यातनाम् ।
यन्न ध्यायति गोविन्दमरविन्दविलोचनम् ॥५८॥

नाम नामरणं मुञ्च नामिनोऽप्यधिकं हरेः ।
यद्देतेनानुरक्तेन तत्तेनोक्तेन लभ्यते ॥५९॥

पश्यामि त्वामरे मूढ ! गूढमज्ञानवारिधौ ।
स्मर संसारसन्तारकारणं चरणं हरेः ॥६०॥

कामात् क्लाम्यसि का रीतिर्न्नारीति नरकाभिधा ।
मलमज्जामयी मांसस्थगी किं न विगीयते ॥६१॥

दुःखनित्यानि वित्तानि त्वं किमासाद्य माद्यसि ।
ये भोक्तुमेतानीच्छन्ति तानेतान्येव भुञ्जते ॥६२॥

किन्ते पुत्रेण मित्रेण धनेनाभिजनेन वा ।
सर्वं शोकाय लोकानामाकाशनगरायितम् ॥६३॥

अलं वा बहुवादेन यत्र यत्रानुरज्यसे ।
तत्र तत्रैव ते दुःखदावपावकपङ्क्तयः ॥६४॥

साम्यङ्कुरु सुते शत्रौ कीटकोटीशयोरपि ।
समो जीवस्तमोरूपं न भावमनुधावति ॥६५॥

---

५७. देवदेव्योऽपि (का). ६१. ति (का), ना (मा रा), ज्ज (का), स्तु (का).
६२. ता (रा), नि (मा रा), न्ये (मा).

भोगारीणां न शक्तोऽसि यदि वा विनिवारणे ।
अनौत्सुक्यमयं वर्म मर्मोमर्मणि धारय ॥६६॥

अनाविलं फलं भुङ्क्ते विषयाणामनुत्सुकः ।
उत्सुको लब्धरोकेण तत्र शोकेन शीर्य्यते ॥६७॥

मा शुचो वार्मुचो वृष्टिर्लोकसृष्टिश्च वेधसः ।
उत्पद्यते विनाशाय क्षणरक्षणलक्षणा ॥६८॥

विधेर्विधानानुविधायिनो जना
गुणागुणौ किं क्वचनापि कस्यचित् ।
नदीरयाद्धावति नौरनौचिती-
महं कृतीत्यञ्चति नाम नाविकः ॥६९॥

दुःखभारापहाराय नारायणमयं जगत् ।
आत्मनश्चिन्तयाभेदाद् भदातीतो भविष्यति ॥७०॥

क्वाप्याकारं हरेः सम्यङ् नियम्य सुचिरं मनः ।
धियं निर्विषयं नीत्वा प्रकाशाकाशमाविश ॥७१॥

प्रक्षिप्य पक्षिवद्बन्धमुड्डीयाकाशमाश्रय ।
पदादास्तामधस्तात्ते मेरोरपि शिरो गतः ॥७२॥

समाधाय धियां धारां निराकारां चिदम्बरे ।
आत्मानमाप्नुहि भ्रातराप्तमोक्षमबोक्षजम् ॥७३॥

लक्ष्मी-राघवयोः सूनोरनूनोऽयङ्गिराङ्गुणैः ।
सुभाषितानां सङ्क्षेपः प्रेक्षावद्भिः परोक्ष्यताम् ॥७४॥

---

६६. यावद्वारिनिवारणे (का), व (का). ६८. णः (का), ६९. का misses this verse. ७०. हा (मा), वे (मा रा). ७१. प्रा (मा). ७२. स्थं स्वकडीया (का), ७४. न्धू (का),

वाग्देवीकरपद्मपञ्जरपठत्कीरायितानां पुरो
गण्यन्ते कवयः क्व वाङ्मयपुरप्राकारकाकायिताः ।
ब्रह्मास्वादसुखावधानमनसां गोष्ठीषु सांसारिकाः
स्वर्गोत्सङ्गनिषादिनोऽपि कुपरीपाका वराका इव* ॥७५॥

प्रादुर्भूय पुरो गिरेरिव हृषीकेशात् कृती राघवो
यस्तिग्मद्युतिवद्दिवाकरमहावंशे दिदीपे द्विजः ।
या लक्ष्मीरथ मैथिलादुदभवत् विद्यावदातात्मन-
स्ताभ्यामुद्भवमापतुः कुशलव-प्रख्यातगोत्रौ सुतौ ॥७६॥

एषा तयोः प्रथमजेन निजानुजात-
श्रीनीलकण्ठ-कविकण्ठ-विभूषणाय ।
तत्तन्नवीनगुणगुम्फनिषक्तसूक्ति-
मुक्तावली हरिहरेण चिरेण चीर्णा ॥७७॥

इति श्रीहरिहरसुभाषिते परमार्थप्रकरणम् ॥१२॥

समाप्तश्चायं ग्रन्थः

—शुभमस्तु—

---

७५. सा (का), सा (मा रा) रती (का), *काव्यमाला ends here.

श्लोकानामकारादिक्रमेणानुक्रमणिका

